(२९५) प्रकटितविविधविहगविरुतैः तालावचरचारणैः पुरःसरैः बालो वसन्त इव उपवनैः क्रियमाणकोलाहलः, (२९६) गन्धतैलावसेकसुगन्धिना दीपिकाचक्रवालस्य आलोकेन कुङ्कुमपटवासधूलिपटलेन इव पिञ्जरीकुर्वन् सकलं लोकम्, (२९७) उत्फुल्लमल्लिकामुण्डमालामध्याध्यासितकुसुमशेखरेण शिरसा हसन्निव सपरिवेशशपाकरं कौमुदीप्रदोषम्, (२९८) आत्मरूपनिर्जितमकरकेतुकरापहृतेन कार्मुकेण इव कौसुमेन दाम्ना विरचितवैकक्ष्यकविलासः, (२९९) कुसुमसौरभगर्भभ्रान्तभ्रमरकुलकल-

---

(२९५) प्रकटितेति।—प्रकटित—प्रकीर्तितं, प्रकाशितञ्च विविधं—बहुप्रकारं, विचित्रमित्यर्थः विरुतं—रागभेदेन "ब्हाग" इति भाषया प्रसिद्धेनेति भाव विहगानां—पक्षिणाञ्च विरुत—सङ्गीतवाद्य यन्त्र येषां येषु वा तैः तानिति।—तालेन—सङ्गीताङ्गविशेषेण, अवचरन्ति—आलपन्तीति तथोक्ता ये चारणा—कुशीलवा तैः। बाल,—नव तरुण इत्यर्थे अभिनवश्च। क्रियमाणेति।—क्रियमाण,—उत्पाद्यमान, कोलाहल,—कलकलनिनादः येन सः।

(२९६) गन्धेति।—गन्धतैलानाम् अवसेकेन—सिञ्चनेन सुगन्धि—सुरभि तेन, दीपिकाचक्रवालस्य—दीपमण्डलस्य आलोकेन—उद्द्योतेन कुङ्कुमेति।—कुङ्कुमाना पटवासधूलय,—वसनसौगन्ध्यकरचूर्णविशेषा, तेषां पटलेन—निचयेन पिञ्जरीकुर्वन्—पिङ्गवर्णीकुर्वन्।

(२९७) उत्फुल्लेति।—उत्फुल्लानां—विकस्वराणां मल्लिकानां—तदाख्यकुसुमानां, या मुण्डमाला शिरोमालिका, तस्या मध्यम् अध्यासित निवेशित कुसुमशेखर—पुष्पमय शिरोभूषणं यस्य तेन। सपरिवेशशपाकरं—सपरिवेश,—परिधिवेष्टित, ("परिवेशस्तु परिधिरुपसूर्यकमण्डले" इत्यमरः) शपाकर,—चन्द्र यत्र तादृश कौमुदीप्रदोष—ज्योत्स्नालङ्कृत रजनीमुखम्। अत्र चन्द्रपरिवेशसौन्दर्यवशात् आगामि प्रभातस्यातिशय्याय इति ध्वनितम्।

(२९८) आत्मेति।—आत्मन—स्वस्य, रूपेण—सौन्दर्येण, निर्जितस्य—पराभूतस्य मकरकेतो,—कामस्य, करात्—हस्तात्, अपहृत—प्रसह्यादत्त तेन कार्मुकेण—धनुषा, कौसुमेन—कुसुमरचितेन दाम्ना—स्रजा, विरचितेति।—विरचित,—सम्पादित, वैकक्ष्यकस्य—वामस्कन्धात् तिर्यगवलम्बिनो हारविशेषस्य, विलास,—शोभा येन तथोक्तः।

प्रलापसुभग पारिजात इव जात' श्रिया सह पुन' अवतारितो, मेदिनी नववधूवदनावलोकनकुतूहलेन इव (२००) कृष्यमाण-हृदय, पतन्निव मुखेन प्रत्यासन्नलग्नो ग्रहवर्म्मा।

(२०१) राजा तु तम् उपद्वारम् आगतं चरणाभ्यामेव राजचक्रानुगम्यमानः ससुत प्रत्युज्जगाम। अवतीर्णञ्च तं कृत-नमस्कारं मन्मथमिव माधवः प्रसारितभुजो गाढम् आलिलिङ्ग। यथाक्रमं परिष्वक्तराज्यवर्द्धन हर्षञ्च हस्ते गृहीत्वा अभ्यन्तरं

---

(२९९) कुसुमेति।—कुसुमानां—पुष्पाणां, सौरभात—आमोदात, गर्वेण—उल्लासेन भ्रान्तानां—भ्रमतां भ्रमराणां—मधुकराणां, कुलस्य—द्वन्दस्य कलप्रलापेन—मधुरास्फुटेन झङ्कारेण, सुभग',—मनोहर., पारिजात इव—देवतरुविशेष इव, श्रिया—लक्ष्म्या सौन्दर्य्येणेत्यर्थ, सहोदरया इति भाव। अवतारित,—अवतार नीत, विधावेति शेष, सहनियतसम्कारवता युगपदाविर्भावादिप्राकृतिकनियमा-दित्याशय'।

(३००) कृष्यमाणहृदय —प्रगृह्य नीयमानमानस। पतन्निव—त्वरयाऽध'स्खलन्निव, अतिपरिचालितधावमानतुरङ्गोद्दामसमर्पणवेगात इति भाव, मुखेन—"ओष्ठौ च दन्त-मूलानि दन्ता जिह्वा च तालु च। गलो गलादिसकल सप्ताङ्ग मुखमुच्यते॥" इत्युक्ता-वयवत्ता वदनेन इत्यर्थ, [ खनधातो "डित् खनेर्मुट स चोदात्त" (उ० ५ पा० २० सू०) इति अचि डित्वात धातोर्मुडागमे रूपम ] वेगात्कष्टानाम् अधोमुखेन पतन लोके प्रसिद्धम। प्रत्यासन्नलग्न' —प्रत्यासन्न—समीपवर्त्ति, लग्न—विवाहकालिकशुभराश्युदयः यस्य तथाभूत, अनुकूलयाधाप्रसादात् सन्निहितवैवाहिकशुभक्षण इत्यर्थ।

(२०१) राजेत्यादि।—उपद्वार—द्वारसमीप द्वारे वा, [ विभक्त्यर्थे अव्ययी-भाव ]। राजचक्रानुगम्यमान',—राजचक्रे,—सभास्थराजसमूहे सौहार्दादि-सम्बन्धोपस्थितैर्वा, अनुस्रियमाण', एतेनास्य चक्रवर्त्तित्व व्यज्यते। प्रत्युज्जगाम—प्रत्युद्गमन चकार अनादिविवाहप्रथावत्तात लौकिकैरपि कन्यापितृभि समित्रकुटुम्बा-दिभि सन्निकृष्टागमने आश्रिता अपि सामन्तसामान्यनरपाला स्वयमुपगम्यन्ते पाद-चारिभि एव' सदातन सदाचार इति गम्यते। अवतीर्णम्—अवरूढ वैवाहिक-यानादिति शेष। माधव,—कृष्ण, वसन्तो वा, मन्मथमिव—प्रद्युम्नमिव काममिव

(२०७) साध्वसनिरुध्यमानहृदयदेशदुःखमुक्तैः निभृतायतैः श्वसितैः अपयान्तं कुमारभावम् इव अनुशोचन्तीम्, (२०८) अत्युत्कम्पिनीं पतनभिया इव त्रपया निष्पन्दं धार्य्यमाणां, हस्तं तामरसप्रतिपक्षम् आसन्नग्रहणं शशिनमिव रोहिणीं भयवेपमानमानसाम् अवलोकयन्तीं, (२०९) चन्दनधवलतनुलता ज्योत्स्नाऽऽदानसञ्चितलावण्यात् कुमुदिनीगर्भादिव प्रसूतां,

---

(२०७) साध्वसेति।—साध्वसेन—सुचिरमध्युषितं मद्धृदयं सपदि विहाय गते त्वयि अहं निराश्रया भवेयमिति भयेनेति भावः, निरुध्यमानः,—मा मा विरहेति इति अवरुध्यमानः, हृदयदेशः,—चित्तदेशः, तस्मात् दुःखेन—क्लेशेन, कुमारभावनिरोधजनितेनेति भावः, समापततः बलवतः तारुण्यस्य तदानीं प्रसभमागमनात् तद्विरोधिनः कौमार्य्यस्य सहसा तद्धृदयदेशादपसरणं वेदितव्यम्, अत अन्यापदेऽपि तद्विरोधार्थमिति तात्पर्य्यम्, मुक्तैः,—त्यक्तैः, अत एव निभृतायतैः,—अस्पष्टदीर्घैः स्पर्शैः, उद्वेगादिति भावः, श्वसितैः,—दीर्घनिश्वासैः, अपयान्तम्—अपसरन्तम्, आत्मानं त्यजन्तमिति यावत्, कुमारभावं—कौमारम्, अनुशोचन्तीं—विलपन्तीं, गतस्य पुनरागमनाऽसम्भवात् इति भावः।

(२०८) अत्युत्कम्पिनीम्—अतिशयेन उत्कम्पमानाम्, अत एव पतनभिया—भूपतनाशङ्कया त्रपया—लज्जया निष्पन्दं—निश्चलं यथा तथा, धार्य्यमाणाम्—अवलम्ब्यमानाम् [illegible], सौभाग्यवती भविष्यति [illegible] दर्शनात् इति भावः। तामरसप्रतिपक्षं—रक्तोत्पलविरोधिनं, रक्तकमलवैरिणम् इत्यर्थः, तदानीं यौवनोद्गमाभावात् आसन्नग्रहणम्—अचिरपाणिपीडनं, [illegible] इति भावः, [illegible] ("[illegible]" इति मेदिनी) भयेति।—भयेन वेपमानं—कम्पमानं, मानसं—चित्तं यस्याः ताम् अवलोकयन्तीं—पश्यन्तीम्। [illegible] [illegible] तस्य [illegible] [illegible] [illegible] रोहिण्याः [illegible] इव यौवनभिया [illegible] पूर्वराग दर्शित इति।

(२०९) चन्दनेति।—चन्दनेन—चन्दनानुलेपनेन, [illegible] इति भावः, धवला—विशदा, तनुलता—[illegible] यस्याः ताम्। ज्योत्स्नेति।—ज्योत्स्नानां—कौमुदीनाम्, आदानेन—ग्रहणेन, सञ्चित—[illegible],

(२१०) कुसुमामोदनिर्हारिणीं वसन्तहृदयात् इव निर्गतां, निश्वासपरिमलाकृष्टमधुकरकुलां मलयमारुतात् इव उत्पन्नां, कृतकन्दर्पानुमरणां रतिमिव पुनर्जातां, (२११) प्रभालावण्य-मदसौरभमाधुर्य्यैः कौस्तुभशशिमदिरापारिजातामृतप्रभवैः सर्व्वरत्नगुणैः अपरामिव सुरासुरकृपा रत्नाकरेण कल्पितां श्रियं,

लावण्य—कान्तिविशेष यस्य तस्मात्, कुमुदिनीगर्भात्—कैरविण्या जठरात्, प्रसूतामिव—निर्गतामिव, अन्यथा जगदाह्लादिनी कथमेतस्या कान्तिः? इत्युत्प्रेक्षा-बीजम्।

(२१०) कुसुमेति।—कुसुमानां—पुष्पाणाम्, आमोदः,—सौरभं, तेन निर्हरति—नीकाशं मानसं रञ्जयतीति यावत् तथोक्ता तां, वसन्तहृदयात्—वसन्तस्य—पुष्पसमयस्य, कन्दर्पपरिजनस्य इति यावत्, हृदयात्—वक्षःस्थलात्, प्रस्फुटितसर्वकुसुमा-मयवस्य वसन्तकालस्य मध्यभागादित्यर्थः, उत्पन्नामिव—सम्भूतामिव, एतेनास्याः अङ्गेषु प्रसूनसौरभसत्त्वात् पद्मिनीस्त्रीत्वं व्यञ्जीकृतमिति। एतदेव विशिष्य व्यनक्ति, निश्वासेति।—निश्वासपरिमलेन—निश्वाससौरभेण, आकृष्टानि—आनीतानि, मधुकरकुलानि—भृङ्ग-वृन्दानि यया ताम्, पद्मिनीनामङ्गनानां निश्वासादेः पद्मगन्धादिविशिष्टत्वादिति भावः, मलयेति।—मलयमारुतस्यापि चन्दनामोदवाहित्वेन सुगन्धत्वादिति भावः। कृतेति।—कृत—विहित, कर्त्तुमभीप्सितमिति यावत्, कन्दर्पस्य—मदनस्य, अनुसरणम्—अनुगमनं यया ताम्। एतेनास्याः पत्युः कन्दर्पप्रतिमत्वं ध्वनितमिति वेदितव्यम्।

(२११) प्रभेति।—प्रभा—कान्तिः, लावण्य—"मुक्ताफलेषु छायायास्तरलत्व-मिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिह स्मृतम्॥" इत्युक्तलक्षणं, मदः,—मद्य-पानजनित उल्लासः, सौरभ—परिमल, माधुर्य्य—"सर्वावस्थाविशेषेषु माधुर्य्यं रमणीयता" इत्युक्तलक्षणं तैः, कौस्तुभशशिमदिरापारिजातामृतप्रभवैः,—कौस्तुभः,—*नारायणवक्षःस्थलस्थमणिविशेषः*, शशी—चन्द्रः, मदिरा—मद्यं, *पारिजातः,—नन्दन*-काननीयपुष्पविशेषः, अमृत—सुधा, तेभ्यः, क्षीरोदमथनोद्भूतेभ्य इति भावः, प्रभवैः,—उद्भूतैः, तत्र कौस्तुभस्य गुणः प्रभा, शशिनो गुणो लावण्यं, मदिराया गुणः मदः, पारिजातस्य गुणः सौरभम्, अमृतस्य गुणो माधुर्यमिति द्रष्टव्यम्। सर्व्वरत्नगुणैः,—सर्वेषां रत्नानाम्—उत्कृष्टानां वस्तूनां, ("जातौ जातौ यदुत्कृष्टं तत्र रत्नमिह कथ्यते" इत्युक्तलक्षणात्) गुणाः,—उत्कर्षाः तैः। सुरासुरकृपा—देवासुरान् प्रति कोपेन,

**(२१२) स्निग्धेन बालिकालोकेन सितसिन्धुवारकुसुममञ्जरीभिः इव मुक्तादीधितिभिः कल्पितकर्णावतंसां, (२१३) कर्णाभरण-मरकतप्रभाहरितशाद्वलेन कपोलस्थलीतलेन विनोदयन्तीम् इव हारिणीं लोचनच्छायाम्, (२१४) अधोमुखं वरकौतुका-लोकनाकुलं मुहुर्मुहुः कृतमुखोन्नमनप्रयत्नं सखीजनं हृदयस्य निर्भर्त्सयन्तीं वधूम् अपश्यत्।**

मन्थनेन स्वस्य निरपराधस्य सर्वोत्कृष्टाना बहुधासञ्चितानां पृथग्रक्षितानाञ्च रत्नानां बलात् ग्रहणजनितेन इति भावः, रत्नाकरेण—समुद्रेण, कल्पिता—निर्मिताम्। पुरा देवासुराभ्यां मिलित्वा बलपूर्वकं समुद्रं विमथ्य निखिलरत्नजातं ततः उद्धृत्य गृहीतमिति पौराणिकी वार्ता, एतामेवोपजीव्य हृतरत्नकेन रत्नाकरेण कोपवशादेव सञ्जिगीषया रत्नगुणान् एकत्रैव सन्निवेश्य निर्मितामिवेत्युत्प्रेक्षितमिति वेदितव्यम्, अन्यथा विधिः कथं न एतादृशीम् अलौकिकचमत्कृतिं निर्मातुं प्रभवेत् इत्याशयः।

(२१२) स्निग्धेन—प्रणयिना बालिकालोकेन—कुमारीदर्शनेन सिताभिः—शुभ्राभिः, सिन्धुवारकुसुमानां—निर्गुण्डीपुष्पाणां, मञ्जरीभिः—वल्लरीभिः, मुक्तादीधितिभिरिव—मौक्तिकप्रभाभिरिव, इत्यवैधर्म्यसाम्ययोगादुपमाऽलङ्कारः, कल्पितः—रचितः कर्णावतंसः—कर्णभूषणं यस्याः ताम्।

(२१३) कर्णेति।—कर्णाभरणेषु—कर्णभूषणेषु, यानि मरकतानि—हरिन्मणयः, तेषां प्रभाभिः—छटाभिः हरितशाद्वलेन—बहुलश्यामघासयुक्तेनेत्यर्थः, ("शाद्वलः शादहरिते" इत्यमरः) कपोलस्थलीतलेन—गण्डतटेन, विनोदयन्तीमिव—प्रीणयन्तीमिव, हारिणीं—मनोहारिणीं, हरिणीसम्बन्धिनीञ्च, लोचनच्छाया—नेत्रकान्तिम्, हरिणीलोचनच्छायामपि शाद्वलं स्थलीभागः स्वाभिरामणीयत्वेन विनोदयति इति। एतेनास्याः हरिणायतलोचनत्वं व्यज्यते।

(२१४) अधोमुखम्—अवनतमुखं, कन्यकाजनसाहजिकत्रपाऽऽवेशात् इति भावः। वरेति।—वरस्य-वोढुः कौतुकेन—कुतूहलेन आलोकने—दर्शने आकुलं—व्याकुलम्। कृतेति।—कृतः मुखस्य उन्नमने—उत्तोलने प्रयत्नः,—चेष्टा येन तम्। हृदयं—चित्तम्, हृदयमपि उक्तविशेषणत्रयविशिष्टमिति बोद्धव्यम्। निर्भर्त्सयन्तीं—निन्दन्तीम्, लज्जां विहाय वरदर्शनार्थं प्रयासकरणात् सखीजन-निभं मन तया दर्शनतृष्णाया प्रबलायां सत्यामपि गुरुजनलज्जावशात् तत्कर्तुमक्षमतया

प्रविशन्तमेव (३१५) तं हृदयचोरं बद्ध्वा समर्पितं जग्राह कन्दर्पः। परिहासस्मेरमुखीभिश्च नारीभिः कौतुकगृहे यद् यत् कार्य्यते जामाता, तत् तत् सर्व्वम् अतिपेशलं चकार। (३१६) कृतपरिणयानुरूपवेशपरिग्रहां गृहीत्वा करे वधूं निर्जगाम; (३१७) जगाम च नवसुधाधवलां निमन्त्रितागतैः तुषारशैलोपत्यकामिव

---

हृदयनिर्भर्त्सनं व्रीडत्वम्। "कन्या त्वजातोपयमा सलज्जा नवयौवना" इति दर्पण-कृदुक्तलक्षणसादृश्यात् नवोढायामप्येतस्या तदानीमपि तद्गुणस्यानपायादिति विभाव्यम्।

(३१५) तं—ग्रहवर्म्माणम्। हृदयचौरं—चेतोऽपहर्त्तारं मनोहरमिति भावः। बद्ध्वा—राज्यश्रिया, समर्पितं—धृत्वा प्रदत्तं कन्दर्पायेति भावः, यथा लोके कश्चित् कमपि चौरं धृत्वा कस्यापि राजपुरुषस्य हस्ते समर्पयति तथा राज्यश्रीरपि तं हृदयचौरं ज्ञात्वा, धृत्वा च कन्दर्पराजहस्ते मनश्चौर्य्यविचारार्थं समर्पितवतीत्यर्थः, ग्रहवर्म्मा राज्यश्रियं दृष्ट्वा कन्दर्पवशगो जात इति भावः। परिहासेति।—परिहासेन स्मेरं—मृदुहसितं मुखं यासां ताभिः। कौतुकगृहे—वैवाहिकमङ्गल्यानुष्ठानजन्य-निर्द्दिष्टभवने। कार्य्यते—आचार्य्यते। अतिपेशलम्—अतिरुचिरम्, अतिदक्षं वा यथा तथा ("पेशलो रुचिरे दक्षे" इति मेदिनी) चकार—कृतवान्, नवीनजामातरं वञ्चयित्वा आनन्दमनुभवितुं परिहासप्रियाभिः ताभिः यत्किञ्चित् सम्भाव्यव्यवहारादिकम् प्रकाशितं स वध्वायत्तहृदयत्वात् तत्सर्वं सत्यं वा छलं वा इति निर्णेतुमशक्यतया अविचार्य्यैव तेन सम्पादितम् इति भावः।

(३१६) कृतेति।—कृतः परिणयस्य—विवाहस्य, अनुरूपस्य—सदृशस्य, वेशस्य—परिच्छदस्य, परिग्रहः,—स्वीकारः, परिधानमित्यर्थः यया तथोक्ताम्, विवाहसमयोचितप्रसाधनवतीम् इत्यर्थः।

(३१७) "जगाम" इत्यस्य "वेदीम्" इत्युत्तरेणान्वयः। तां विशिनष्टि, नवेत्यादि। —नवाभिः,—नूतनाभिः सद्यः प्रदत्ताभिरित्यर्थः सुधाभिः,—चूर्णलेपैः इत्यर्थः, धवला —श्वेता ताम्। निमन्त्रिताः,—आहूता इत्यर्थः, तथाभूताः सन्तः आगताः —उपस्थिताः, तैः। तुषारशैलस्य—हिमगिरेः, ("तुषारस्तु हिमम्" इत्यमरः), उपत्यकामिव —आसन्नां भूमिमिव, ("उपत्यकाऽद्रेरासन्ना भूमिः" इत्यमरः)।

(३१८) त्र्यम्बकाम्बिकाविवाहाहृतैः भूभृद्भिः परिवृतां, (३१९) सेकसुकुमारयवाङ्कुरदन्तुरैः पञ्चास्यैः कलशैः कोमलवर्णिकाविचित्रैः अमलमुखैश्च (३२०) मङ्गल्य-फलहस्ताभिः अञ्जलिकारिकाभिः उद्भासितपर्यन्ताम्, (३२१) उपाध्यायोपधीयमानेन्धनधूमायमानाग्निमभ्युक्षण-क्षणिकोपद्रष्टृद्विजाम्, (३२२) उपक्रमानुनिहितानुप-

(३१८) त्र्यम्बकाम्बिकाविवाहाहृतैः,—हरगौरीविवाहनिमन्त्रितैः, भूभृद्भिः,—राजभिः, पर्वतैश्च परिवृताम—आकीर्णाम्। अत्र भूभृद्भिः इव भूभृद्भिः इति उपमानोपमेययोः समानशब्दोपादानात् श्लेषसहोत्थोपमा।

(३१९) सेकेति।—सेकेन—जलसिञ्चनेन, सुकुमाराः,—सुकोमला ये यवाङ्कुराः,—यवप्ररोहाः तैः दन्तुराः,—सञ्जातदन्ता इव लक्ष्यमाणाः तैः, [दन्तशब्दात् उन्नत दन्तार्थे "दन्त—" (५।२।१०६ पा०) इत्यादिना उरचि रूपम्] पञ्चास्यैः,—पञ्चमुखैः, कलशैः,—कुम्भैः। कोमलेति।—कोमलाभिः,—नयनसुभगाभिरित्यर्थः, वर्णिकाभिः,—वर्णविशेषैः, चन्दनादिभिः खटिकादिभिर्वा इति यावत् विचित्राः,—रम्याः तैः, अमल-मुखैः,—शोभनैः, यद्वा,—अमं०—पात्रम्, आवरणपात्रविशेष इति यावत्, ("सन्नमा-वपन भाण्डं पात्रामत्रञ्च भाजनम्" इत्यमरः) मुखे—अग्रभागे येषां तैः। ["अमल-मुखैश्च" इत्यत्र "अमितमुखैश्च" इति पाठोऽपि—रूप्यमयैः इत्यर्थः]।

(३२०) मङ्गल्येति।—मङ्गल्य—मङ्गलाय हितं, फल—नारिकेलाम्रादिकं, हस्ते यासां ताभिः, अञ्जलिकारिकाभिः,—मन्मथप्रतिमाभिः, शालभञ्जिकाभिर्वा, उद्भासितपर्यन्ता—विद्योतितप्रान्तभागाम्।

(३२१) उपाध्यायेति।—उपाध्यायेन—गुरुणा, पुरोधसेति यावत्, उपधीय-मानानि—अर्प्यमाणानि इन्धनानि—काष्ठानि, अग्निस्थापनार्थमिति भावः, तैः धूमाय-मानः,—धूममुद्वमन् योऽग्निः,—अनलः, वैवाहिकहोमीय इति भावः, तस्य अभ्युक्षणे—प्रज्वालने, क्षणिकः,—क्षणेन कार्य्यसम्पादनार्थी, व्यग्र इत्यर्थः, ["अभ्युक्षणक्षणिको—" इत्यत्र "अभ्युक्षणाक्षणिको—" इति पाठे,—अक्षणिकः,—क्षणादतीत अक्षणः,—कालातिक्रमणमित्यर्थः, तदस्यास्ति अक्षणिकः,—कार्य्यनिष्पादने क्षणादिविचाररहितः, व्यग्र इत्येवार्थः] उपद्रष्टा—साक्षीभूतः, "उपदेष्टा" इति केचित्, द्विजः,—ब्राह्मणः, ऋत्विगित्यर्थः यस्यां तथोक्ताम्।

(३२२) उपेति।—उपक्रमानु—अग्निसन्निधौ, निहिता,—स्थापिता, अनुप-

हूतहरितकुशां, सन्निहितदृषदजिनाज्यस्रुक्समित्पूलीनिवहां, (२२३) नूतनशूर्पार्पितश्यामलशमीपलाशमिश्रलाजहासिनीं वेदीम्। आरुरोह च तां दिवमिव सज्योत्स्न शशी। (२२४) समुत्ससर्प च वेल्लितारुणशिखापल्लवस्य शिखिनः कुसुमायुध इव रतिद्वितीयो रक्ताशोकस्य समीपम्। हुते च (२२५) हुतभुजि दक्षिणावर्त्तप्रवृत्ताभिः वधूवदनविलोकनकुतूहलिनीभिः इव ज्वालाभिः एव सह प्रदक्षिणं बभ्राम। पात्यमाने च

---

हूता,—अच्छिन्ना, हरिता,—हरिद्वर्णा, सद्य समाहृता इति यावत् महोत्सवादौ तथाविधानामेवोपयोगात् इति भाव, कुशा,—दर्भा यस्यां ताम्। सन्निहितेति।—सन्निहिता,—समीपस्था, दृषत्—शिला, अजिन,—चर्म्म, आज्य—घृतं, स्रुक—होमभाण्ड, समिध,—काष्ठानि, तेषां पूल्य,—श्रेण्य, तासां निवहा—सङ्घाः यस्यां ताम्।

(२२३) नूतनेति।—नूतने—नवे, शूर्पे—प्रस्फोटने, "कुला" इति वङ्गीयैः परिभाषिते, अर्पितानि—स्थापितानि, श्यामलानि—हरिद्वर्णानि, यानि शमीपलाशानि—शमीपत्राणि तै मिश्रा,—सवलिता, लाजा,—अक्षतानि, भृष्टधान्यानीत्यर्थ, "खइ" इति वङ्गीयै "लाइ" इति च पाश्चात्यै परिभाषितानि, तै हसति—राजते इति तथाविधा ताम् अतिधावल्यात लाजानां तेषु हासत्वमुपचरित वदिभ्रम "यशांसि धवलता वर्ण्यते हासकीर्त्यो" इति कविसमयप्रसिद्धेरिति। तां—वेदीम, आरुरोह—आरूढवान। सज्योत्स्न,—ज्योत्स्नासहित, सवधूक इति भाव।

(२२४) समुत्ससर्प—उपातिष्ठत्। वेल्लितेति।—वेल्लिता,—चलिता अरुणा,—रक्ता, शिखा,—ज्वाला, पल्लवा इव—किशलया इव शिखा एव पल्लवाश्च यस्य तथाभूतस्य शिखिन,—अग्न, द्रुमस्य च वृक्षस्य वेत्यर्थ, "शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे" इति मेदिनी) कुसुमायुध इव—काम इव। रक्ताशोकस्य—विकसित पुष्पाशोकपादपस्य। तस्य रक्तप्रसूनत्वात अग्निभाव, मदनोद्दीपकत्वाच्च तत्रानियतकाल मवस्थायिना सस्त्रीकमदनेन सह सवधूककुमारस्य साम्य सुप्रतिष्ठितमेवेति ज्ञयम् अत्र उपमालङ्कार।

(२२५) हुतभुजि—अग्नौ, दक्षिणावर्त्तप्रवृत्ताभि,—दक्षिणस्यां दिशि आवर्त्तेन प्रवृत्ताभि, तथा च, ऋत्विजां दक्षिणा हि आज्यग्रहणार्थं समुन्मुख प्रधावताभि,

लाजाञ्जलौ नखमयूखधवलिततनुः अदृष्टपूर्व्ववधूवररूपविस्मयस्मेर इव अदृश्यत विभावसुः।

अत्रान्तरे (२२६) स्वच्छकपोलोदरसङ्क्रान्तमनलप्रतिबिम्बमिव निर्व्वापयन्ती (२२७) स्थूलमुक्ताफलविमलवाष्पबिन्दुसन्दोहदर्शितदुर्द्दिना निर्व्वदनविकारं रुरोद वधूः। (२२८) उदश्रुविलोचनानाञ्च बान्धववधूनाम् उदपादि महान् आक्रन्दः। परिसमापितवैवाहिकक्रियाकलापस्तु जामाता

---

प्रदक्षिणप्रवृत्ताभिरित्यर्थः; दक्षिणावर्त्तस्य तस्य शुभसूचकत्वादिति भावः। ज्वालाभिः,—शिखाभिः। पात्यमाने—प्रक्षिप्यमाणे, अर्प्यमाणे इत्यर्थः, लाजाञ्जलौ—अक्षताञ्जलौ, भृष्टधान्याञ्जलावित्यर्थः; कुमारिकाकर्त्तृके लाजहोमसम्पादनार्थमिति भावः। नखेति।—नखानां—करजानां, वधूवरयोरिति भावः, मयूखैः—प्रभया, धवलिता—शुभ्रीभूता, तनुः—देहः यस्य तथाभूतः, अत एव अदृष्टेति।—अदृष्टपूर्व्वेण—प्रागनवलोकितेन, वधूवरयोः,—कन्याजामात्रोः, रूपेण—सौन्दर्य्येण, यो विस्मयः,—आश्चर्य्यभावः, तेन स्मेर इव—सहास इव, विभावसुः,—वह्निः। शुक्लभास्वरप्रभावतः कृशानोः स्वगुणत्यागात् नखमयूखैः अत्युत्कृष्टधवलितत्वरूपगुणग्रहणेन तद्गुणालङ्कृतिः सहोत्प्रेक्षा।

(२२६) स्वच्छेति।—स्वच्छम्—उज्ज्वलम्, कपोलस्य—गण्डस्य, उदरम्—अभ्यन्तरम्, तत्र सङ्क्रान्तम्,—प्रतिफलितं तम्, अनलप्रतिबिम्बमिव—अग्निप्रतिच्छायामिव, निर्व्वापयन्ती—प्रशमयन्ती। अग्निदाहमशौ निराकर्त्तुमेवाश्रुविसर्ज्जनमित्युत्प्रेक्षावीजमवगन्तव्यम्।

(२२७) स्थूलेति।—स्थूलानि—पृथूनि मुक्ताफलानि—मौक्तिकानि इव, विमलाः—स्वच्छाः, वाष्पबिन्दूनाम्—अश्रुकणानां सन्दोहाः,—समूहाः, तैः दर्शितं—प्रकटितं, दुर्द्दिनं—मेघाच्छन्नम् अहः, पतदश्रुजलनीरासारं वासरमिति यावत्, दुःखजनकं दिनञ्च, सामयिकपित्रादिविच्छेदसम्भावनया इति भावः यया तथाभूता। निर्व्वदनविकारं—निः,—नास्ति, वदनस्य—मुखस्य, विकारः,—विकृतिः यस्मिन् तत् यथा तथा, निःशब्दमिति भावः।

(२२८) उदश्रुविलोचनानाम्—उद्गतवाष्पनेत्राणां, बान्धववधूनां—स्वजननारीणाम्, आक्रन्दः,—क्रन्दनम्, ("आक्रन्दः क्रन्दने दाने मित्र दारुणयुद्धयोः" इति मेदिनी)।

बध्वा मम प्रणनाम श्वश्रूः। (२२९) प्रविवेश च द्वारपक्ष-लिखितरतिप्रीतिदैवतं, प्रणयिभिः इव प्रथमप्रविष्टैः अलिकुलैः कृतकोलाहलम्, (२३०) अलिकुलपक्षपवनप्रेङ्खोलितैः कर्णोत्पलप्रहारभयप्रकम्पितैः इव मङ्गलप्रदीपैः प्रकाशितम्, (२३१) एकदेशलिखितस्तवकित रक्ताशोकतरुतलभाजा अधिज्यचापेन तिर्य्यक्कूणितनेत्रविभागेण शरमृजूकुर्व्वता

(२२९) "प्रविवेश" इत्यस्य "वासगृहम्" इत्युत्तरेण सम्बन्धः। तदेव विशिनष्टि, द्वारेत्यादि।—द्वारपक्षे—द्वारपार्श्वे ("पक्षो मासार्द्धके। वाजे कुञ्जरपार्श्वयो" इति मेदिनी) लिखितं—चित्रितं, रतिप्रीतिदैवतं—रतिरेव—कामवधूरेव, प्रीतिदैवतं—प्रणयदेवता यस्य तत्, यद्वा,—रतेः,—दाम्पत्यानुरागस्य, प्रीतेः,—हर्षे, दैवतम्—अरुन्धत्यादीनां पतिव्रताललामभूतानां देवतानां समूहः यत्र तथाविधम्, एता हि दाम्पत्यसुखविधायिन्य इति वेदितव्यम्। प्रणयिभिरिव—सुहृद्भिरिव, प्रथमप्रविष्टैः—अग्रे एव अन्तर्गतैः, कुसुमामोदसमाकृष्टैरिति भावः, प्रणयिनः प्रणयवतामन्तःपुरादावपि स्वच्छन्दसञ्चारिणः भवन्तीति गम्यते।

(२३०) अलीति।—अलिकुलानां—भ्रमरवृन्दानां, पक्षपवनेन—पत्रवायुना, प्रेङ्खोलिताः,—कम्पिताः तैः, अत एव कर्णेति।—कर्णोत्पलस्य—कर्णभूषणीभूतस्य उत्पलस्य प्रहारात्—ताडनात्, भयेन—भीत्या, प्रकम्पितैरिव—प्रकम्पितैरिव, बहुताडितानां ताडनभयस्य सततविभावात् इति भावः। ननु सत्स्वपि बहुषु वस्तुषु वासगृहे कथमत्र ताडनाशङ्का मङ्गलप्रदीपानां जाता? इति चेदभिधीयते,—सम्प्रति-पत्त्या तुल्यबलाः परस्परं प्रतिद्वन्द्विमाश्रयन्ते इति दृश्यते, अत एव कर्णोत्पलायमानाः मङ्गलदीपाः भ्रमराभिलङ्घनजन्ति कर्णोत्पलान्दोलनं तेषां स्वताडनार्थं समुद्योगमिवामन्यन्त इत्युत्प्रेक्षावीजमवधेयम्।

(२३१) एकेति।—एकदेशे—एकस्मिन् विभागे, लिखितः,—चित्रितः, स्तवकितः—सञ्जातगुच्छः, यः रक्ताशोकतरुः,—रक्तपुष्पाशोकवृक्षः, तस्य तलं—निम्नदेशं, भजते—आश्रयति इति तथोक्तेन तत्तलस्थितेन इत्यर्थः, अधिज्यचापेन—मौर्व्वीयुतधन्वना, तिर्य्यगिति।—तिर्य्यक्—वक्रं यथा तथा, कूणितः,—सङ्कोचितः, नेत्रविभागः,—नयनस्य तृतीयांशः येन तथाविधेन, लक्ष्यस्थिरीकरणाय अपाङ्गाश्रीकृतदर्शनेत्यर्थः, शरं—बाणम्, ऋजूकुर्व्वता—सन्दधतेत्यर्थः।

कामदेवेन अधिष्ठितम्, (२२२) एकपार्श्वन्यस्तेन काञ्चनचामरकेण इतरपार्श्ववर्त्तिन्या च दान्तशफरकधारिण्या कनकपुत्रिकया साक्षाल्लक्ष्म्येव उद्दण्डपुण्डरीकहस्तया सनाथेन सोपधानेन स्वास्तीर्णेन शयनेन शोभमानं, (२२३) शयनशिरोभागस्थितेन च कृतकुमुदशोभेन कुसुमायुधसाहायकाय आगतेन शशिनेव निद्राकलशेन राजतेन विराजमानं वासगृहम्।

तत्र च (२२४) क्रीताया नववधूकायाः पराङ्मुखप्रसुप्ताया मणिभित्तिदर्पणेषु मुखप्रतिबिम्बानि (२२५) प्रथमालापाकर्णनकौतुकागतगृहदेवताऽऽननानीव मणिगवाक्षकेषु वीक्षमाणः

---

(२२२) एकपार्श्वन्यस्तेन—एकपार्श्वनिहितेन, काञ्चनचामरकेण—काञ्चनं—सौवर्णं, चामरकं—चमरव्यजनप्रतिकृति तेन। "काञ्चनचामरकेण" इत्यत्र "काञ्चन-चामरकेण" इति पाठकल्पने साधु, काञ्चनचामरकेण—स्वर्णदण्डशोभितबालव्यजनेन। इतरपार्श्ववर्त्तिन्या—अपरपार्श्वस्थापितया, दान्तेति।—दान्त—गजदन्तमय, शफरकं—कुमुदविशेषमित्यर्थः, धरति—गृह्णातीति तथोक्तया, कनकपुत्रिकया—काञ्चनपुत्तलिकया। उद्दण्डेति।—उद्दण्डम्—उद्गतनालं, पुण्डरीकं—श्वेतपद्मं, हस्ते यस्याः तथाभूतया। सनाथेन—युक्तेन। सोपधानेन—उपधानं—"बालिश" इति बङ्गभाषया प्रसिद्धं, तत्सहितेन, स्वास्तीर्णेन—शोभनास्तरणशालिना, शयनेन—शय्यया, पर्यङ्केणेत्यर्थः।

(२२३) शयनेति।—शयनस्य—शय्यायाः, शिरोभागे—अग्रभागे, स्थितेन—निहितेन, कृतेति।—कृता—विरचिता, कुमुदेन—कैरवेण, कुमुदस्य च, शोभा—सौन्दर्यं यस्य येन च तेन, कुसुमेति।—कुसुमायुधस्य—पुष्पशरस्य, कामस्येत्यर्थः, साहायकाय—साहाय्यकरणाय, शशिनः उद्दीपकत्वादिति भावः। राजतेन—रौप्यमयेन, निद्राकलशेन—निद्रायां—शयने, शयनगृहे इत्यर्थः, यः कलशः,—घटः, लोकशास्त्रादीनाराध्य मङ्गलार्थं स्थापित इति भावः तेन।

(२२४) क्रीतायाः,—वञ्चितायाः। पराङ्मुखप्रसुप्तायाः,—पराङ्मुखं निद्रितायाः, लज्जावशादेवेति भावः। मणीति।—मणिभित्तय,—रत्नकुड्यानि एव, दर्पणाः,—आदर्शाः तेषु, मुखप्रतिबिम्बानि—आननप्रतिच्छायाः।

(२२५) प्रथमेति।—प्रथमालापस्य—आद्यसम्भाषणस्य, आकर्णने—श्रवणे, यत् कौतुकं—कौतूहलं, तस्मात् आगताः,—उपस्थिताः, या गृहदेवताः,—भवनाधि-

क्षणदां निन्ये। स्थित्वा च श्वशुरकुले (२२६) शीलेन अमृतमिव श्वश्रूहृदये वर्षन्, अभिनवाभिनवोपचारैः अपुनरुक्तानि आनन्दमयानि दश दिनानि स्थित्वा, दत्त्वा राजदौवारिकमिव राजकुले रणरणकं, यौतुकनिवेदितानि इव संवलानि आदाय हृदयानि सर्व्वलोकस्य, कथञ्चयमपि विसर्ज्जितो नृपेण वध्वा सह स्वदेशम् अगमदिति।

इति श्रीबाणभट्टकृते हर्षचरिते चक्रवर्त्तिजन्मवर्णनं नाम

चतुर्थ उच्छ्वासः ॥ ४ ॥

---

हार्दैव्य, तासाम् आननानि इव—मुखानि इव, मणिगवाक्षकेषु—रत्नमयवातायनेषु, [ गवाम् अक्षीव इत्यत्र "अक्ष्णोऽदर्शनात्" (५।४।७६ पा०) इति समासान्ते अचि "अवङ्—" (६।१।१२२ पा०) इत्यादौ व्यवस्थितविभाषाश्रयणात् अवङि रूपम् ] वीक्षमाणः,—पश्यन्, क्षणदा—रात्रिं, निन्ये—यापयामास इत्यर्थः।

(२२६) शीलेन—सच्चरित्रेण। अभिनवाभिनवोपचारैः,—प्रतिदिनं नूतननूतनसत्कारैः। अपुनरुक्तानि—अनास्वादितपूर्वाणि। राजदौवारिक—राजद्वाररक्षकम्। रणरणक—विच्छेदजनितमुद्वेगमित्यर्थः, [ रण,—शब्द, तत्प्रकारः द्वित्व, तत संज्ञायां कन् ] दौवारिको यथा नियतमेव द्वारमाक्रम्य वर्त्तते, तथा तद्गमनजनितरणरणकोऽपि सदैव राजपरिजनानां हृदयमाक्रम्य अतिष्ठदिति भावः। यौतुकेति।—यौतुकाय—वैवाहिकोपहाराय निवेदितानि—समर्पितानि। संवलानि—पाथेयानि, आदाय—गृहीत्वा, छलेनेत्यर्थः। कथञ्चयमपि—अतिक्लेशेन, कथञ्चिदित्यर्थः, अपत्यभूतं वस्तु न हि क्लेशेनापि नयनगोचरादपसारयितुं शक्यते सहसा पाषाणहृदयैरपीति भावः, विसर्ज्जितः,—गमनाय अनुमत इति यावत्। वध्वा—राज्यश्रिया।

इत्यशेषमाम्नायवीसहरणपञ्चाननेन वात्स्यवंशावतंसेन पण्डितकुलपतिना वि ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीमन्नित्यबोध विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायाञ्चामलाख्यायां श्रीहर्षचरितव्याख्यायां चतुर्थ उच्छ्वासः ॥ ४ ॥

# पञ्चम उच्छ्वासः ।

नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम् ।
कृत्वाऽऽलोकं तरला तडिदिव वज्रं निपातयति ॥ १ ॥
पातयति महापुरुषान् सममेव बहूननादरेणैव ।
परिवर्त्तमान एकः कालः शैलानिवानन्तः ॥ २ ॥

(१) अथ कदाचित् राजा राज्यवर्द्धनं कवचहरम् आहूय हूणान् हन्तुं हरिणान् इव हरिर्हरिणैमकिशोरम् अपरिमित

---

इदानीं राज्ञः प्रभाकरवर्द्धनस्य स्वर्गमनं सूचयितुं नियतेः कालचक्रस्य गतिं तावत् प्रकटयति नियतिरिति।—नियतिः,—दैवम्, ("दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः) प्रथमम्—आदौ इत्यर्थः, पुंसां—जनानां, सुखम्—आनन्दम्, विधाय—दत्त्वा, तरला—चपला, तडित्—विद्युत्, आलोकम्—उद्द्योतं, कृत्वा—सम्पाद्य, उपरि—पश्चात् वज्रमिव—अशनिमिव, दारुणं—भीषणं, दुःखं—क्लेशं, निपातयति—आनयतीत्यर्थः। अत्र तडिता सह नियतेर्वैधर्म्यसाम्यप्रतिपादनात् निपातनादिरूपसामान्यधर्मादीनाञ्च वाच्यत्वात् पूर्णोपमाऽलङ्कारः। आर्य्या वृत्तम् ॥ १ ॥

पातयतीति।—अनन्तः—असीमः, शेषाख्यनागश्च, एकः—केवलः, एकाकी च, सहायान्तरनिरपेक्ष इत्यर्थः, कालः,—समयः, महाकालश्च, प्रलयकाले सङ्कर्षणाख्यस्य अनन्तदेवस्य मुखोद्भूतेन प्रचण्डानलेन जगतो विध्वंसकारित्वोक्तेः, परिवर्त्तमानः,—चक्रवत् परिभ्रमन्, शिरःपरिवर्त्तनादिकं कुर्वंश्च, शैलान्—पर्वतानिव समम्—तुल्यकालमेव, युगपदित्यर्थः, बहून्—अनेकान्, महापुरुषान्—श्रेष्ठजनान्, अनादरेणैव—अवहेलयैव, पातयति—ध्वंसयति। एतेन वर्त्तमानस्य राज्ञः भाविनिधनं सूचितम्। अत्रापि पूर्ववदेवोपमाऽलङ्कारः। आर्य्या वृत्तम् ॥ २ ॥

(१) अथेत्यादि।—कवचहरं—वर्मधरं, ["हरतेर—" (३।२।९ पा०) इत्यादिना कवचोपपदात् हरतेः अचि रूपम्]। हूणान्—तदाख्यान् म्लेच्छजाति-विशेषान्। हरिः,—सिंहः। हरिणैमकिशोरः—हरीन्द्रशिशुः, सिंहशावकमित्यर्थः, हरिः हरिणैमकिशोरं हरिणान् हन्तुं यथा प्रहिणोति, तथा राजा राज्यवर्द्धनं हूणान् हन्तुं प्राहिणोदित्यन्वयः। अत्र हकार रकार णकारादीनाम् असकृदावृत्त्या वृत्त्यनुप्रासः,

बलानुयातं चिरन्तनैः अमात्यैः अनुरक्तैश्च महासामन्तैः कृत्वा साभिसारम् उत्तरापथं प्राहिणोत्।

(२) प्रयान्तञ्च तं देवो हर्षः कतिचित् प्रयाणकानि तुरङ्गमैः अनुवव्राज। प्रविष्टे च (३) कैलासप्रभाभासिनीं ककुभं भ्रातरि, वर्त्तमाने नवे वयसि विक्रमरसानुरोधिनि (४) केसरिशरभशार्दूलवराहबहुलेषु तुषारशैलोपकण्ठेषु (५) उत्कण्ठमानवनदेवताकटाक्षश्यामायितशरीरकान्तिः क्रीडन् मृगया

---

पूर्णोपमाऽलङ्कारश्च। अपरिमितबलानुयातम्—अपरिमितैः,—प्रभूतैः, बलैः,—सैनिकैः, सामर्थ्यैश्च, अनुयातम्—अनुगतं, चिरन्तनैः,—प्राचीनैः, मूलामात्यैरित्यर्थः, "सेवकाद्धे पुरातने" इत्युक्तेर्निरतिशयविश्वासपात्रैः इति भावः, अनुरक्तैः,—स्वामिनि अनुरागवद्भिः, महासामन्तैः—सामन्तप्रधानैः। साभिसारं—ससहायमित्यर्थः। ["साभिसारम्" इत्यत्र "साभिसरम्" इति पाठोऽपि स एवार्थः, यद्वा—तैः सानुचरं सम्राट्सुतत्वात् सामन्तैः सेवकादिभिरनुसृतम्]। उत्तरापथम्—उत्तरदिक्स्थप्रदेशविशेषं, प्राहिणोत्—प्रेषयामास।

(२) प्रयान्तं—गच्छन्तं, रणायेति शेषः। प्रयाणकानि—पदानि। अनुवव्राज—अनुजगाम, निमलसौभ्रात्रभावात् प्रवासगमनप्रवृत्ते प्रियजने कियत्पथं तदनुसरणस्य लोकाचारसिद्धत्वाच्च इति भावः।

(३) कैलासेति।—कैलासस्य—तदाख्यस्य अद्रेः, प्रभया—कान्त्या, भासते—द्योतते इति तथोक्तां तां, ककुभं—दिशम्। भ्रातरि—राज्यवर्द्धने। नवे वयसि—प्रथमयौवने इत्यर्थः। विक्रमरसानुरोधिनि—विक्रमे—शौर्य्ये यो रसः,—अनुरागः, उत्साह इति यावत् तम् अनुरुध्यते—अनुबध्नाति इति तथाभूते, यौवनकालस्वभावात् शौर्य्यप्रदर्शनोपयोगिनीत्यर्थः।

(४) केसरीति।—केसरिणः—सिंहाः, शरभाः—अष्टापदमृगाः शार्दूलाः,—व्याघ्राः, वराहाः,—शूकराः, तैः बहुलेषु—आकीर्णेषु, यद्वा—तैः बहुला—प्रभूता यत्र तथोक्तेषु, दुर्गमस्थानादौ तेषां प्राचुर्य्यमिति भावः, तुषारशैलोपकण्ठेषु—हिमाचलान्तिकेषु।

(५) उत्कण्ठेति।—उत्कण्ठमानानां—तद्दर्शनोत्सुकानां तस्य शोभनाकृतिदर्शनेन उत्

(९) "लोके हि लोहेभ्यः कठिनतराः खलु स्नेहमया बन्धनपाशाः, यदाकृष्टाः तिर्य्यञ्चोऽपि एवम् आचरन्ति" इति। (१०) प्रबुद्धस्य च अस्य मुहुर्मुहुः दक्षिणेतरम् अक्षि पस्पन्दे; गात्रेषु च अकस्मादेव वेपथुः विपप्रथे; निर्निमित्तम् एव अन्तर्बन्धनस्थानात् चचाल इव हृदयम्; अकारणादेव च अजायत गरीयसी दुःखासिका। "किमिदम्?" इति च (११) समुत्पन्नविविधविकल्पविमथितमतिः अपगतधृतिः चिन्ताऽवनमितवदनः स्तिमिततारकेण चक्षुषा (१२) समुद्भिद्यमानस्थलकमलिनीवनामिव चकार चकोरेक्षणः क्षणं क्षौणीम्। अह्नि च तस्मिन् शून्येन एव च चेतसा चिक्रीड मृगयाम्।

---

(९) लोके—जगति, संसारे इत्यर्थः, कठिनतराः,—अतिकठिनाः, स्नेहमयाः,—स्नेहात्मकाः, बन्धनपाशाः—बन्धनरज्जवः। यदाकृष्टाः,—यैः,—पाशैः, आकृष्टाः,—नियन्त्रिताः तिर्य्यञ्चः,—पशुपक्ष्यादयः, एवम्—अग्निप्रवेशेन आत्मत्यागरूपं व्यवसायमिति भावः।

(१०) प्रबुद्धस्य—जागरितस्य। दक्षिणेतरं—वामम्, अक्षि—नेत्रं, पस्पन्दे—पुस्फोर। वेपथुः,—कम्पः, विपप्रथे—प्रचकाश, आविरभूदित्यर्थः। निर्निमित्तम्—अहेतुकम्, अन्तरिति।—अन्तः,—देहाभ्यन्तरे इत्यर्थः, यत् बन्धनस्थानं—संयमनस्थानं हृदयस्येति भावः तस्मात् चचाल—चकम्पे, हृत्कम्पः जात इत्यर्थः। गरीयसी—अतिगुर्व्वी, दुःखासिका—दुःखेन अवस्थानम्, माङ्गलिकारत्याविर्भावात, निश्चिन्तप्रायः अरुन्तुदा शोकसन्ततिर्वा।

(११) समुत्पन्नेति।—समुत्पन्नेन—आविर्भूतेन, विविधेन—नानाप्रकारेण, विकल्पेन—संशयेन, विमथिता—आलोडिता, मतिः,—बुद्धिर्यस्य तथाभूतः, अपगतधृतिः,—अधीरः, शुभमशुभं वा इति निर्णेतुमशक्यत्वात् इति भावः, चिन्तेति। —चिन्तया—दुर्भावनया, अवनमितम्—अधःकारितं, वदनं—मुखं येन तथाभूतः। स्तिमिततारकेण—निश्चलकनीनिकेन।

(१२) समुद्भिद्यमानेति।—समुद्भिद्यमानं—विकासं गच्छत्, स्थलकमलिनीवनं—स्थलपद्मिनीकाननं यस्यां तामिव। चकोरेक्षणः,—चकोरनेत्रः, स्वाभाविकारुण्यात् इति भावः। क्षौणीं—पृथ्वीम्।

(१३) आरोहति च हरितहये मध्यमह्नो भवनम् आगत्य उभयतो मन्दमन्दं संवाह्यमानतनुतालवृन्तः क्षितितलवितताम् (१४) अतिशिशिरमलयजरसलवलुलितवपुषम् इन्दुधवलोपधान-धारिणीं वेत्रपट्टिकाम् अधिशयानः सातङ्क एव तस्थौ।

(१५) अथ दूरादेव लेखगर्भया नीलीरागमेचकरुचा चीरचीरिकया रचितमुण्डमालकं, (१६) श्रमातपाभ्याम् आरोप्यमाणकायकालिमानम्, अन्तर्गतेन शोकशिखिना दह्य-

---

(१३) हरितहये—हरिदश्वे, सूर्ये इत्यर्थः, अह्नः,—दिवसस्य, मध्यं,—मध्यभागं तम्, आरोहति—उपयाति, मध्याह्ने जाते इत्यर्थः। उभयतः,—उभयोः पार्श्वयोरित्यर्थः। संवाह्यमानेति।—संवाह्यमानः—संवीज्यमानः, किङ्करादिभिः इति भावः, तनु—स्वल्पं, क्षुद्रमित्यर्थः, मन्दं मन्दं यथा स्यात्तथा वा, तालवृन्तं—व्यजनं यस्य तथाभूतः। क्षितितलवितताम्—भूतलविस्तृताम्।

(१४) अतिशिशिरेति।—अतिशिशिरेण—अतिशीतलेन, मलयजरसस्य—चन्दनद्रवस्य, लवेन—बिन्दुना लुलितं—लिप्तं, वपुः,—अवयवः यस्याः तथोक्ताम्। इन्दुधवलेति।—इन्दुः,—चन्द्रः, तद्वत् धवलं—शुभ्रम्, उपधानम्—उपबर्हं, "बालिश" इति ख्यातं शिरःस्थापनोपयोगितूलपूर्णद्रव्यविशेषः इत्यर्थः, तत् धरतीति ताम्, उच्छिरस्कामित्यर्थः, वेत्रपट्टिका—"शीतलपाटी" इति समाख्यया वङ्गदेशे प्रसिद्ध-वेत्रनिर्मितशयनसाधनविशेषम्। सातङ्कः,—सोद्वेगः।

(१५) "अथ" इत्यस्य "दूरादेव ··कुरङ्गकनामानम् आयान्तम् अद्राक्षीत्" इति अग्रेण सम्बन्धः। तं विशिनष्टि, लेखगर्भयेत्यादिभिः।—लेखगर्भया—अन्तर्गतलिप्या, नीलीति।—नीलीरागः,—नीलवर्णः, यद्वा,—नीली—"नील" इति प्रसिद्धः क्षुप-विशेषः, तस्या रागः,—रञ्जनं, तेन तद्वत् मेचका—श्यामला, मयूरकण्ठाभा इत्यर्थः, ('कृष्णे नीलासितश्यामकालश्यामलमेचकाः' इत्यमरः) रुक्—कान्तिः यस्याः तया, चीरचीरिकया—वसनखण्डेन, रचितेति।—रचिता—कृता, मुण्डमाला—शिरोमाला, शिरोवेष्टनमित्यर्थः येन तम्।

(१६) श्रमेति।—श्रमः,—आयासः, आतपः,—रौद्रञ्च ताभ्याम्, आरोप्य-माणेति।—आरोप्यमाणः,—उत्पाद्यमानः, कायस्य—देहस्य, कालिमा—कार्ष्ण्यं यस्य तम्। अन्तर्गतेन—हृदयस्थेन, शोककशिखिना—शोकाग्निना, दह्य-

रताम् इव नीयमानम्, (१७) अतित्वराऽऽगमनद्रुततरपदोद्धूयमानधूलिराजिव्याजेन राजवार्त्ताश्रवणकुतूहलिन्या मेदिन्या इव अनुगम्यमानम्, (१८) अभिमुखपवनप्रेङ्खत्प्रविततोत्तरीयपटप्रान्तवीज्यमानोभयपार्श्वम् अतित्वरया कृतपक्षम् इव आशु परापतन्तं, प्रेर्य्यमाणम् इव पृष्ठतः स्वाम्यादेशेन, कृष्यमाणम् इव पुरस्तात् आयतैः श्रमश्वासमोक्षैः, (१९) स्विद्यल्ललाटतटघटमानप्रतिबिम्बकेन कार्य्यकौतुकात् अपह्रियमाणलेखमिव भास्वता, सम्भ्रमभ्रष्टैः इव इन्द्रियैः शून्यीकृतशरीरं,

---

रतामिव—अत्यातरतामिव नीयमानं—प्राप्यमाणं सन्तापातिरेकस्य जायमानत्वात् कृष्णवर्णादप्रभामिति भावः ।

(१७) अतीति ।—अतित्वरया—अतिवेगेन आगमनम्—आगतिः तस्मिन् द्रुततरैः—अतिशीघ्रैः शीघ्रगमनविशिष्टैरित्यर्थः पदैः—पदक्षेपैः उद्धूयमाना—उत्क्षिप्यमाणा या धूलीनां—रजसां राजिः—श्रेणी समूह इत्यर्थः तद्व्याजेन—तन्मिषेण राजवार्त्ताश्रवणकुतूहलिन्या—राज्ञः प्रभाकरवर्द्धनस्य सम्वादाकर्णनौत्सुक्यवत्या मेदिन्या—पृथिव्या क्षितिपतिवार्त्ता राजपुत्राय इति भावः अनुगम्यमानम्—अनुस्रियमाणम् ।

(१८) अभिमुखेति ।—अभिमुखपवनेन—सम्मुखागतेन वायुना प्रेङ्खन्—चलन् प्रविततस्य सुविस्तृतस्य उत्तरीयपटस्य—उत्तरीयवसनस्य यः प्रान्तः—पर्य्यन्तभागः तेन वीज्यमानौ—प्राप्तवीजनौ उभयौ—द्वौ पार्श्वौ—कक्षयोरधोभागौ यस्य तम् अत एव कृतपक्षं—जनितगरुतमिव । परापतन्तं समागच्छन्तम् । प्रेर्य्यमाणमिव—प्रणुद्यमानमिव । स्वाम्यादेशेन—प्रभुनियोगेन । पुरस्तात्—अग्रतः, आयतैः—दीर्घैः श्रमश्वासमोक्षैः—परिश्रमजनितनिश्वासमोचनैः अविश्रामधावने तथैव सञ्चारात् इति भावः ।

(१९) स्विद्यदिति ।—स्विद्यत्सु—घर्म्माक्तेषु ललाटतटेषु—भालदेशेषु घटमानः—पतत् *प्रतिबिम्बं—प्रतिरूपं यस्य तथाभूतेन भास्वता—सूर्य्येण* कार्य्यकौतुकात्—केन कार्य्यानुरोधेन अयमीदृक् द्रुततरं गच्छति इति ज्ञातुमौत्सुक्यात् अपह्रियमाणः—चौर्य्यमाणः लेखः—लिपिः यस्मात् यस्य वा तम् ("लेखा लिपिराजिकयोरपि" इति मेदिनी)। सम्भ्रमभ्रष्टैरिव—सम्भ्रमः—कार्य्यव्यग्रता तेन भ्रष्टानि—

(२०) लेखापितप्रयोजनगौरवात् इव समेऽपि वर्त्मनि शून्यहृदयतया स्खलन्तं, कालमेघशकलम् इव पतिष्यतो दुर्वार्त्तावज्रस्य, धूमपल्लवम् इव ज्वलिष्यतः शोकज्वलनस्य, बीजम् इव फलिष्यतो दुष्कृतशालेः, अनिमित्तभूतदीर्घाध्वगं कुरङ्गकनामानम् आयान्तम् अद्राक्षीत्।

दृष्ट्वा च (२१) पूर्वानिमित्तपरम्पराऽऽविर्भूतभीतिः अभिद्यत हृदयेन। कुरङ्गकस्तु कृतप्रणामः समुपसृत्य प्रथमम्

च्युतानि तैरिव, इन्द्रियैः,—हस्तपादादिभिः, शून्यीकृतेति।—शून्यीकृतं—विरहितमित्यर्थः, शरीरं—देहः यस्य तथोक्तः, महाऽऽपदि तथैव वैकल्योत्पत्तेः इति भावः।

(२०) लेखेति।—लेखे—पत्रिकायाम्, अर्पितस्य—निहितस्य, लिखितस्येत्यर्थः, प्रयोजनस्य—कार्यस्य, गौरवं—गुरुत्वं तस्मादिव, समे—समतले, अवन्धुरे इत्यर्थः, अपि वर्त्मनि—पथि, शून्यहृदयतया—विमनस्कतया, महाराजामङ्गलाशङ्कयेति भावः, स्खलन्तं—पतन्तम्। कालमेघशकलमिव—कृष्णवर्णमेघखण्डमिव, प्रलयकालिकसंवर्त्तादिवलाहकखण्डमिव वा, दुर्वार्त्तावज्रस्य—दुः,—दुष्टा, कठिना इत्यर्थः, वार्त्ता—संवादः एव वज्रम—अशनिः तस्य (वजधातोः "ऋज्रेन्द्राग्र—" (उ० २ पा० २८ सू०) इत्यादिना रनि रूपम्]। धूमपल्लवमिव—धूमनिचयमिव, शोकज्वलनस्य—शोकाग्नेः। फलिष्यतः—फलं प्रसविष्यमाणस्य, दुष्कृतशालेः,—दुःखव्रीहिभेदस्य, दुर्दैवधान्यविशेषस्य वा, त्वरितफलाविर्भावद्योतनार्थं शालेरौपम्यम्। अनिमित्तभूतदीर्घाध्वगं—दुर्निमित्तसूचकं दीर्घपथिकम्, यद्वा,—अनिमित्तभूतं—दुर्निमित्तरूपं, दीर्घम—आयतम्, अध्वानं—पन्थानं गच्छतीति तथोक्तम्, विशिष्टामङ्गलसम्भावनाव्यतिरेकेण ईदृशदीर्घाध्वागमनप्रयोजनाभावात् इति भावः।

(२१) पूर्वेति।—पूर्वाभिः,—प्रागनुभूताभिः, अनिमित्तपरम्पराभिः,—दुर्लक्षणसमूहैः, दुःस्वप्नदर्शनादिरूपैः इति भावः, ["पूर्वानिमित्त—" इत्यत्र "पूर्वनिमित्त—" इति पाठे,—पूर्वेषां—पूर्वदृष्टानां, निमित्तानां—हेतूनां, दुःस्वप्नादिदुर्निमित्तसूचकानामिति भावः] आविर्भूता—सञ्जाता, भीतिः,—भयं यस्य तथाभूतः, ["—आविर्भूत—" इत्यत्र "—आविर्भावित—" इति पाठान्तरम्, तत्र पूर्वानिमित्तपरम्पराभिः कर्त्रीभिः आविर्भाविता—सञ्जनिता, भीतिः यस्य तादृशः] हृदयेन अभिद्यत—भग्नहृदयोऽभूदित्यर्थः, दूतस्य व्यग्रमलिनत्वप्रदर्शनात् इति भावः।

कृताचमनश्च (२३) जनयितुः आयुष्कामोऽपरिमितमणि-कनकरजतजातमात्मपरिवर्हम् अशेषं ब्राह्मणसात् अकरोत्, (२४) अभुक्त एव उच्चचाल। "दापय वाजिनः पर्य्याणम्" इति च पुरःस्थितं शिरःकृपाण विभ्राणं बभाण युवानम्। (२५) वेपमानहृदयश्च ससम्भ्रमप्रधावितपरिवर्हकोपनीतम् आरुह्य तुरङ्गमम् एकाकी एव प्रावर्त्तत।

(२६) अकाण्डप्रयाणसंज्ञाशङ्कक्षुभितन्तु सम्भ्रमात् सज्जीभूतम् उद्धूतमुखरखुररवभरितसकलभुवनविवरम् आगत्यागत्य सर्व्वाभ्यो दिग्भ्यो धावमानम् अश्वीयम् अढौकत।

---

(२३) जनयितुः—पितुः, आयुष्कामः—जीविताकाङ्क्षी, अपरिमितेति।—अपरिमितानि—असङ्ख्यानि, मणयः—रत्नानि, कनकानि—काञ्चनानि, रजतानि—रौप्याणि, तेषां जातं—समूहम्, आत्मनः—स्वस्य, परिवर्हं—परिच्छदम्, अश्वोपकरणभूतमिति यावत्, अशेषं—समग्रं, ब्राह्मणसात्—विप्रदेयं, ब्राह्मणाधीनमित्यर्थः।

(२४) अभुक्त एव—असम्पन्नान्नपानादिक्रिय एव, उच्चचाल—गन्तुमियेष इत्यर्थः। दापय—आरोपय इत्यर्थः, वाजिनः—अश्वस्य, पर्य्याणं—पल्ययनम्। शिर इति।—शिरसि—मूर्द्धि, कृपाणम्—असिं, निहितमिति भावः, विभ्राणं—धारयन्तं, प्रभुनिर्देशाकर्णने सत्वरया तदाचारवत्त्वात् इति भावः। बभाण—उवाच।

(२५) वेपमानहृदयः—कम्पमानचित्तः। ससम्भ्रमेति।—ससम्भ्रमं—सत्वरं, प्रधावितः—प्रचलितः, यः परिवर्हकः,—अश्वपालः तेन उपनीतं—उपस्थापितं तम्। एकाकी एव—असहाय एव। प्रावर्त्तत—प्रचक्रमे, गन्तुम् इति शेषः।

(२६) अकाण्डेति।—अकाण्डे—असमये सहसा इत्यर्थः, प्रयाणं—यात्रा, प्रत्यावर्त्तनमिति यावत् तस्य संज्ञा—सूचना, ("संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना" इत्यमरः) तस्याः शङ्का—सन्देहः इत्यर्थः, तेन क्षुभितं—समाकुलितम्। सम्भ्रमात्—आवेगात्, उद्वेगात्, सज्जीभूतं—कृतसज्जम्, उद्धूतेति।—उद्धूतेन—उद्गतेन मुखरेण—उच्चैः प्रहतेन इत्यर्थः, खुराणाम्—अश्वशफानां रवेण—नादेन, भरितम्—आपूरितं सकलं भुवनानां—जगतां, विवरम्—अन्तरालं येन यस्य वा तथाभूतम्। सर्वाभ्यः,—चतसृभ्य इत्यर्थः। अश्वीयम्—अश्वानां समूहः अश्वीयम्—

(२७) प्रस्थितस्य च अस्य प्रदक्षिणेतरं प्रयान्तो विनाशम् उपस्थितं राजसिंहस्य हरिणाः प्रकटयाम्बभूवुः। (२८) अशिशिररश्मिमण्डलाभिमुखश्च हृदयम् अवदारयन् इव दावशुष्के दारुणि दारुणं रराण वायसः। (२९) कज्जलमय इव बहुदिवसम् उपचितबहलमलपटलमलिनिततनुः अभिमुखम् आजगाम शिखिपिच्छलाञ्छनो नग्नाटकः।

---

धर्मेनाङ्गन्द समादिक, खलङ्गमाप्रसिद्धात इति भाव सन्मार्गेनयनात् तेभ्यो हितम अष्टादीक्षितैर्निरर्थी वा ["तस्य समूह" (४।२।३७ पा०) इति "तस्मै हितम्" (५।१।५ पा०) इत्यर्थे वा छविधानात इति ज्ञेयम्] अङ्गीकृत—अनुदयो, तमिति शेष ।

(२७) प्रस्थितस्य—प्रचलितस्य अस्य—हर्षस्य। प्रदक्षिणेतरम—अप्रदक्षिणं यथा तथा, वामभागेन इति यावत प्रयान्त,—गच्छन्त। राजसिंहस्य—राजश्रेष्ठस्य, ("स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्या पुंसि श्रेष्ठार्थगोचराः॥" इत्यमर), यद्वा—राजा सिंह इव राजेव सदृश तस्य, हरिणाः,—मृगाः हरिणा हि अरण्ये उड्डीत चलन्त तदरण्यस्य सिंहाभाववत्त्वं सूचयन्ति। प्रकटयाम्बभूवुः,—सूचयामासुः उक्तञ्च—"वामे प्रवसिवाकुम्भा दक्षिणे गोमृगद्विजा" इति।

(२८) अशिशिरेति।—अशिशिरा—उष्णाः, रश्मय,—किरणा यस्य तस्य, सूर्यस्येत्यर्थ, मण्डलं—बिम्ब तदभिमुख,—तत्सम्मुखीकृत्य उपविष्ट इत्यर्थ। अवदारयन—विदारयन व्यथयन्निति यावत् तादृशवायसानामनिष्टसूचकत्वादिति भाव। दावशुष्के—वनाग्निना दग्धावशिष्टे इति यावत दारुणि—काष्ठे, अर्धदग्धशुष्कवृक्षे इत्यर्थ, स्थित इति शेष। दारुणं—श्रुतिकठोरं यथा तथा रराण—दध्वान, एतस्य दर्शनश्रवणमुक्तं वराहमिहिरेण, यथा—"छिन्नाग्रशुष्कस्थितो कलह शुष्कद्रुमस्थिते ध्वाङ्क्षे" इति।

(२९) कज्जलमय इव—अञ्जनमय इव। उपचितेति।—उपचितेन—वृद्धिं गतेन अङ्गमलेषु जीवानां सञ्चारसम्भावनया जलस्नानरतानां तत्क्षालननिषेधादिति भाव बहलेन—प्रभूतेन मलपटलेन—किट्टनिचयेन मलिनिता—सञ्जातमलिना तनुः,—शरीरं यस्य तथाभूत। शिखीति।—शिखिन,—मयूरस्य, पिच्छ—बर्हं लाञ्छनं—चिह्नं यस्य तथाभूत नग्नाटक,—नग्न,—विवसन सन्, अटति—भ्रमतीति तथोक्त, नग्नक्षपणक इत्यर्थं दिगम्बरबौद्धसन्यासीति यावत। अहिंसा परमो धर्मो वदन्ति बौद्धे शरीरकीटविनाशशङ्कया न शरीरसंस्कार कुर्वते, मयूरपिच्छकृतेन

(३०) दुर्निमित्तैः अनभिनन्द्यमानगमनश्च नितराम् अप्रह्वत। हृदयेन पितृस्नेहाहितम्रदिम्ना च तत्तदुपेक्षमाणः, (३१) तुरङ्गमस्कन्धबद्धलक्ष्यं चक्षुः अविचलं दधानः, समवसितहसितसङ्कथः, (३२) तूष्णीभूतेन भूपाललोकेन अनुगम्यमानो (३३) बहुयोजनसम्पिण्डितम अध्वानम् एकेन एव अह्ना समलङ्घयत्।

(३४) उपलब्धनरेन्द्रमान्द्यवार्त्ताविषसे इव नष्टतेजसि

---

व्यजनेन च दधि आकाशे च सञ्चारिष कीटा अपसार्यन्ते आघातौघप्रासादिभ्यः तद्भयात् इति प्रसिद्धि, तेषाञ्च दर्शनस्य दुर्लक्षणत्वमुक्त यथा,—"नपुंसकव्यङ्गनग्नमुक्तकच्छासिताम्बरा। प्रस्थाने वा प्रवेशे वा नेष्यन्ते दर्शनं गता॥" इति।

(३०) दुर्निमित्ते,—पूर्वोक्तै वामगहरिणादिभि दुर्लक्षणै, अनभिनन्द्यमानम्—अप्रशस्यमानम्, अनाद्रियमाणमिति यावत्, गमनं यस्य तथाभूत, गत्वा किं द्रक्ष्यामि? किं श्रोष्यामि? अथवा अस्मच्छून्य एव समये कदाचित् अनर्थपात घटेत, तर्हि किं मुख दर्शयाम अम्बाया? इति विचिन्त्य मन्दोत्साहगतिक इत्यर्थ, नितराम्—अतिशयेन। पितेति।—पितरि—जनके, स्नेह,—प्रेम अनुरागविशेष इत्यर्थ तेन आहित,—जनित, म्रदिमा—मार्दवं यस्य तेन, जनकशङ्काकुलेन इति भाव, तत्तत्—दुर्निमित्तजातमित्यर्थ, उपेक्षमाण,—अगणयन्।

(३१) तुरङ्गमेति।—तुरङ्गमस्य—स्ववाहनस्य, स्कन्धे—गलदेशे एव, बद्ध—संलग्नमित्यर्थं, लक्ष्य—दृष्टिविषय यस्य तथोक्तम्, अविचल—स्थिरं, चक्षु,—नेत्र, दृष्टिमित्यर्थं, दधान,—धारयन्। समवसितेति।—समवसिता—अवसान गता, ["समवसित—" इत्यत्र "दु समवसित—" इति पाठे,—दु,—दु खात्, समवसिता इत्यर्थ.] हसितेन—हासेन सह, सङ्कथा—आलाप यस्य स।

(३२) तूष्णीभूतेन—मौनिना, महादुर्भावनया विस्मृताभ्यावेशेन इति भाव।

(३३) बहुयोजनेति।—बहुभि,—अनेकै, योजनै,—क्रोशचतुष्टयै ("स्यात् योजन क्रोशचतुष्टयेन" इति लीलावती) सम्पिण्डित—सम्बद्ध, पूर्णमिति यावत् गुणित वा, बहुयोजनविस्तृतमित्यर्थ। अह्ना—दिवसेन, ["अपवर्गे तृतीया" (२।३।६ पा०) इति तृतीया]। समलङ्घयत्—अतिचक्राम।

(३४) उपलब्धेति।—उपलब्धया—विदितया, नरेन्द्रस्य—राज्ञ, मान्द्यवार्त्तया

अधोमुखीभवति भगवति भानुमति भण्डिप्रमुखेण प्रणयिना राजपुत्रलोकेन बहुशो विज्ञाप्यमानोऽपि न आहारम् अकरोत्। (२५) पुरःप्रवृत्तप्रतीहारगृह्यमाणग्रामीणपरम्पराप्रकाटितप्रगुणवर्त्मा च वहन्नेव निन्ये निशाम्।

(२६) अन्यस्मिन् अहनि मध्यन्दिने विगतजयशब्दम्, अस्तमिततूर्य्यनादम्, उपसंहृतगीतम्, उत्सारितोत्सवम्, अप्रगीतचारणम्, (२७) अप्रसारितापणपण्यं, स्थानस्थानेषु पवन-

---

—अनुग्रहसंवादेन, विषण्णे इव—विषादं गते इव, व्यथिते इव इत्यर्थः, नष्टतेजसि—मन्दप्रभे, स्वागुरुसेवकक्लेशदर्शनात इति भाव, अधोमुखीभवति—पश्चिमाशामवतरतीत्यर्थः। भानुमति—सूर्य्ये। भण्डिप्रमुखेण—भण्डिप्रभृतिना। विज्ञाप्यमानोऽपि—अनुरुध्यमानोऽपि, प्रणयप्राचुर्य्यात् सहचराचारनियमवत्त्वात वा इति भाव॥

(२५) पुर इति।—पुर,—अग्रत, प्रवृत्तेन—प्रचलितेन, प्रतीहारेण—दौवारिकेण, गृह्यमाणा—ध्रियमाणा, पथिज्ञानार्थमाहूय आनीयमाना इत्यर्थः, या ग्रामीणपरम्परा,—ग्रामवासिगणः, त्वमितग्रात ग्रामात् अग्रवर्त्तिग्रामपर्य्यन्त पन्थान प्रदर्शय, त्वमपितस्मात् पुर स्थग्रामपर्य्यन्तमित्येवरूपेण आदिश्यमानप्रतिग्रामस्थजना इति भाव ताभि प्रकटित—प्रदर्शित प्रगुणम्—ऋजु, सुगममित्यर्थ, ("ऋजावजिह्मप्रगुणौ" इत्यमर) वर्त्म—पन्था यस्य तथाभूत सन्, वहन्नेव—अविश्राम चलन्नेव, पितृपादर्शनौत्सुक्येन इति भाव।

(२६) "अन्यस्मिन्" इत्यस्य "स्कन्धावारमाससाद" इत्युत्तरेणान्वय। मध्यन्दिने—मध्याह्ने। स्कन्धावार विशिनष्टि, विगतेत्यादि।—विगत —विरहित, जयशब्दः,—जयसूचकमङ्गलनिनाद यस्मात यस्मिन् वा त, महाविषादात् इत्याशय। अस्तमितेति।—अस्तमिता,—अस्त गता, नष्टा इत्यर्थः, तूर्य्याणां—वादित्रभेदानां, नादा,—ध्वनयः यस्मिन् तम्। उपेति।—उपसंहृतानि—व्यक्तानीति यावत्, गीतानि—गानानि यस्मिन् यस्माद्वा तम्। उत्सारितोत्सवम्—अपनीतानन्दम्। अप्रगीतचारणम्—प्रकृष्ट गीत येषा ते प्रगीता, न सन्ति प्रगीता अप्रगीता,—अकृतसङ्गीता इत्यर्थ, चारणा,—कुशीलवा, नटा इति यावत यस्मिन् तम्।

(२७) अप्रसारितेति।—न प्रसारितानि—न विस्तारितानि, आपणेषु—निषद्यासु, हट्टेषु इत्यर्थं, ("आपणस्तु निषद्यायाम्" इत्यमर.) पण्यानि - विक्रेयवस्तूनि

पवनकुटिलाभिः कोटिहोमधूमलेखाभिः उल्लसन्तीभिः (३८) यममहिषविषाणकोटिभिः इव उल्लिख्यमानं, कृतान्तपाशवागुराभिः इव वेष्ट्यमानम्, (३९) उपरि कालमहिषालङ्कारकालायसकिङ्किणीभिः इव कटु क्वणन्तीभिः दिवस वायसमण्डलीभिः भ्रमन्तीभिः आवेद्यमानप्रत्यासन्नाशुभं, (४०) क्वचित् प्रतिशायितस्निग्धबान्धवाराध्यमानाहिबुध्नं, क्वचित् (४१) दीपिकादह्यमान-

---

यस्मिन् तम्। पवनेति।—पवनस्य—वायोः बलेन—वेगेन कुटिलाः,—भङ्गिमत्यः ताभिः, कोटीति।—कोटिहोमस्य—राज्ञः पीडानिवृत्त्यर्थं स्वस्त्ययनेषु कोटिसंख्य अनुष्ठितहोमस्य इति भावः, धूमलेखाभिः,—धूमराजिभिः, उल्लसन्तीभिः,—उद्गच्छन्तीभिः।

(३८) यमेति।—यमस्य—कृतान्तस्य, राज्ञो ग्रहणाय आगतस्य इति भावः, यो महिषः,—वाहनभूत इति भावः, तस्य विषाणकोटिभिरिव—शृङ्गाग्रैरिव, उल्लिख्यमानम्—उद्घृष्यमाणं समन्तादाकीर्यमाणमिति यावत्। कृतान्तेति।—कृतान्तस्य—यमस्य, पाशाः,—प्राणिसंयमनार्थमस्त्रविशेषाः एव, वागुराः,—मृगबन्धनजालविशेषाः ताभिः, [ वाधातो "मद्गुरादयश्च" (उ० १ पा० ४२ सू०) इति आकृतिगणत्वात् उरचि गुगागमे निपातनात् रूपम्। "वागुरा मृगबन्धनी" इत्यमरः ] वेष्ट्यमानमिव—संबध्यमानमिव।

(३९) उपरि—ऊर्ध्वदेशे, अन्तरीक्षे इत्यर्थः, कालेति।—कालस्य—यमस्य, ( "शमनो यमराड् यमः। कालो दण्डधरः" इत्यमरः ) यो महिषः,—वाहनस्वरूपः तस्य अलङ्काराः,—आभरणरूपाः, याः कालायसकिङ्किण्यः—कृष्णलौहनिर्मितक्षुद्रघण्टिकाः ताभिरिव, कटु—श्रुतिविरसं यथा तथा इत्यर्थः, क्वणन्तीभिः,—रुवतीभिः दिवस—कृत्स्नं दिनं व्याप्य इत्यर्थः, भ्रमन्तीभिः—विचरन्तीभिः, वायसमण्डलीभिः,—काकनिवहैः, आवेद्यमानेति।—आवेद्यमानं—सूच्यमानं, प्रत्यासन्नम्—आगतप्रायम्, अशुभम्—अमङ्गलं राजविनाशरूपमिति भावः यस्मिन् तं, महोत्पातादौ क्रूरजीवानां स्वयं सहसा समापतनबलादिति भावः।

(४०) क्वचित्—कुत्रचित् विभागे, प्रतिशायितेति।—प्रतिशायितैः—कृतोपवासैः इत्यर्थः, स्निग्धैः,—वत्सलैः, राजनि अनुरक्तैरित्यर्थः, बान्धवैः,—बन्धुजनैः, आराध्यमानः,—उपास्यमानः आरोग्यकामनयेति भावः, अहिबुध्नः,—अहिना शोभितं बुध्नं,—ग्रीवा, अहेरिव बुध्नो वा यस्य सः अष्टमूर्त्तिः, शिव इत्यर्थः, सततकण्ठावेष्टितभुजङ्गत्वात्

विलीयमानगुग्गुलुविकलनवसेवकानुनीयमानमहाकालम्, अपरत्र
(४५) निशितशस्त्रीनिकृत्तात्ममांसहोमप्रसक्तासवर्गम्, अपरत्र
(४६) प्रकाशनरपतिकुमारकक्रियमाणमहामांसविक्रयप्रक्रमम्,

---

तथा,—"सर्वाबाधासु घोरासु वेदनाभ्यर्दितोऽपि वा। स्मरन्ममैतन्माहात्म्यं नरो मुच्येत सङ्कटात्॥" इति च। ["चण्डीड्रियमाण … चण्डिकम्" इत्यत्र "चण्डीड्रियमाणाभ्योपयाच्यमानचण्डिकम्" इति पाठे,—अन्त्रेव चण्डिग्रमाणं यस्य—बलिपशौ उदरदेशस्थनाडीविशेष, तेन, तद्दानेन इत्यर्थं, उपयाच्यमाना—"देवि। एतद्दानद्वयेन सन्तुष्टा राजानं नीरुजं कुरु" इति प्रार्थ्यमाना, चण्डिका यत्र त, तेषाम् उत्कटतत्भीताधारत्वात् इत्याशय]।

(४४) शिर इति।—शिरसा—मूर्ध्ना, विधृतेन—गृहीतेन, शिरसि स्थापितेन इत्यर्थं, विलीयमानेन—अग्न्युत्तापेन विगलता, गुग्गुलुना—तन्निक्षिप्तधूपविशेषेण, विकल,—विह्वल धूपानलसन्तापात् इति भाव, यो नव,—नवीन, युवेत्यर्थं, तद्दाना तद्धारणासामर्थ्यादिति भाव, सेवक,—उपासक, तेन अनुनीयमान,—प्रसाद्यमान, कालकवलाद्राजरक्षणार्थमिति भाव, महाकाल,—हर यस्मिन् तम्, तदुक्तमग्निपुराणे,—"गुग्गुलं घृतसंयुक्तं साक्षात् गृह्णाति शङ्कर," इति।

(४५) निशितेति।—निशितया—तीक्ष्णया, शस्त्र्या—क्षुरिकया, ("स्याच्छस्त्री चासिपुत्री च क्षुरिका चासिधेनुका" इत्यमर) निकृत्तेन—छिन्नेन, आत्मन—स्वस्य, मांसेन-पिशितेन यो होम,—दैवयज्ञ, देवानुद्दिश्य मन्त्रोच्चारणपूर्व्वकमग्नौ आहुतिदानमित्यर्थः, तस्मिन् प्रसक्ता,—प्रवृत्ता, आप्तवर्गा,—स्वजना यस्मिन् तम्, इतरेषां तत्साधने तथाविधानुरागाभावात् इत्याशय, उक्तञ्च तन्त्रसारे,—"य स्वहृदयसञ्जातं मांसं साधकसाधक। तिलमुद्गप्रमाणं वा दद्यात् भक्तियुतो नर॥ स एव मासाभ्यन्तरे काममिष्टमवाप्नुयात्॥" इति।

(४६) प्रकाशेति।—प्रकाशं—सर्व्वसमक्षं यथा तथा नरपतीनां—राज्ञां, करदानां सामन्तानामित्यर्थं, कुमारकै,—तनयै, क्रियमाण,—विधीयमान, महामांसानां—मनुष्यपिशितानां, निहतमनुष्यपुरुषावयवगृहीतानामिति भाव, विक्रयस्य, पिशाचादिभ्य इति भाव, प्रक्रम,—प्रारम्भ यस्मिन तथोक्तम्, पिशाचादयोऽपि महामांसप्राप्त्या तद्विनिमयेन अलौकिकशक्तिमत्तया विक्रेतृणामुपकारं कुर्व्वन्ति, अत्र तु राजजीवनोपायभूतौषधादिदानमेव उपकार इति भाव। तादृशक्रियाया राजदण्डभयात् लोकापवादभीते, वा अप्रकाशम् अनुष्ठानं तत्र क्रियते, इह तु राजाभीष्ट-

(४७) उपहतमिव श्मशानपांशुभिः, अमङ्गलैरिव परिगृहीतं, यातुधानैरिव विध्वस्तं, कलिकालेन इव कवलितं, (४८) पापपटलैः इव सञ्छादितम्, अधर्मविक्षेपैः इव लुण्ठितम्, अनित्यताधिकारैः इव आक्रान्तं, नियतिविलासैः इव आस्कन्दितं, शून्यमिव, सुप्तमिव, मुषितमिव, विलम्बितमिव, छलितमिव, मूर्च्छितमिव स्कन्धावारम् आससाद ।

---

सिद्धये तदनुष्ठानात् न राजदण्डभयं न लोकनिन्दाभयं वा इति प्रकाशशब्देन आवेदितम् ।

(४७) श्मशानेति ।—श्मानः,—शवाः शेरतेऽत्र इति श्मशानः—शवदाहस्थानम्, [ श्मन्नुपपदात् 'शेते' इत्यस्मात् "शुषि—" (उ० २ पा० ९० सू०) इत्यादिना उणादिविधानात् बाहुल्यवत्त्वात् इति आनचि तत्रैव चकारग्रहणात् ङित्वात् रूपम् ] तस्य पांशुभिः—श्मशानस्थधूलिपुञ्जैः इत्यर्थः, उपहतमिव—दूषितमिव नीरसेक मार्जनाद्यभावात पांशुल्यमिति भावः । अमङ्गलैः,—अशुभैः, परिगृहीतमिव आक्रान्तमिव, सर्वैरेव प्रबलविषादग्रासमाक्रान्तत्वादिति भावः । यातुधानैरिव—राक्षसैरिव, ("राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः । यातुधानः पुण्यजनः" इत्यमरः) विध्वस्तं—विनष्टं सर्वत्र स्थितिनियमानुकूलसङ्कल्पाभावात् । कवलितं—ग्रस्तं, शासनाभावात् दुर्वृत्तानां प्रभावाधिक्यात्, लुण्ठनादिव्यापारविरतत्वाच्च इति भावः ।

(४८) पापपटलैरिव—कलुषनिचयैरिव, सञ्छादितम्—आकीर्णम् । अधर्मविक्षेपैः इव—अधर्मसञ्चारैरिव लुण्ठितं—कृतलुण्ठनम् । अनित्यताधिकारैरिव—अनित्यः—संसारोऽयं क्षणभङ्गुरः, तस्य भावः अनित्यता—विनश्वरता तया धिक्काराः—अनित्यः संसारः धिगिति वचनानि तैरिव, आक्रान्तम्—अभिभूतं, शोकावेगात् सर्वेषां कर्तव्येषु औदासीन्यादिति भावः । नियतिविलासैरिव—भाग्यविचेष्टितैरिव, आस्कन्दितं—गृहीतम्, अहो दुर्दैवम् । कथमस्माकमीदृशी दशा समुपस्थिता इत्येवं दैन्यवाक्यप्रवर्तनादिति भावः । शून्यमिव—जनरहितमिव, सुप्तमिव—निद्रितमिव, महाशोकवैक्लव्येन सर्वथा निःशब्दमवस्थानादिति भावः । मुषितमिव—हृतसर्वस्वमिव इत्यर्थः, विभूषिताङ्गानामपि जनानां भूषणादिकं परित्यज्य दीनभावेनावस्थानादिति भावः । विलम्बितमिव—अप्रतिभमिव, वञ्चितमिव वा । छलितमिव—प्रतारितमिव, दुर्भावनया सुखादिवैकल्यादिति भावः । मूर्च्छितमिव—मोहं गतमिव,

पाल्यमाने शशिनि क्रमेण (२०३) नृपचितानलधूमविसरधूसरीकृततेजसि इव नरपतिशोकपावकदाहकिणकलङ्ककालीकृतचेतसि इव (२०४) प्रोषितसमस्तान्तःपुरपुरन्ध्रिमुखचन्द्रवृन्दोद्वेगविद्राणवपुषि इव (२०५) प्रथमास्तमितरोहिणीरणरणकविमनसि इव च अस्तमुपगते रजनिकरे, राजतीव देवे दिवसे आरूढे सवितरि परिवृत्ते राज्ये इव रजनीप्रबन्धे, (२०६) प्रबुद्धराजहंसमण्डलप्रबोध्यमान पङ्कजाकरे इव

तने पाल्यमाने—क्षियमाणे क्षीयमाने च शशिनि—चन्द्रमसि अलौकिके च चन्द्रमसि इति भावः।

(२०३) नृपेति।—नृपस्य—राज्ञः चितानलस्य—शवदाहनवह्नेः धूमविसरेण—धूमनिचयेन धूसरीकृतम्—ईषत्पाण्डूकृतं तेजः—प्रभा यस्य तथाभूते इव। नरपतीति।—नरपतेः—राज्ञः शोकः—मन्युः पावक इव—अग्निरिव तस्य दाहेन—सन्तापेन यः किणकलङ्कः—शुष्कव्रणचिह्नं तेन कालीकृतम्—मलिनीकृतं चेतः—हृदयम् अन्तर्दशा इति भावः यस्य तथाभूते इव।

(२०४) प्रोषितेति—प्रोषितानाम्—पतिशोकात् परलोकं प्रस्थितानां समस्तानाम्—समग्राणाम् अन्तःपुरपुरन्ध्रीणाम् अन्तःपुरमहिलानां मुखानि आननानि चन्द्रवृन्दानि इव—शशधरसमूहा इव तेभ्यः उद्वेगः—त्रासः तेन विद्राणम्—पलायमानं [विद्रातं निद्रायां "संयोगादेरातो—(८२४३ पा०) इत्यादिना निष्ठातस्य नत्वे "अट्कुप्वाङ—(८४२ पा०) इत्यादिना णत्वम्] वपुः—शरीरं यस्य तथाभूते।

(२०५) प्रथमेति।—प्रथमम्—प्राक् अस्तमिता—अस्तं गता या रोहिणी—नक्षत्रविशेषः स्वप्रणयिनी तु यावत् तस्याः रणरणकेन—उत्कण्ठया उत्मनः वा विमनाः—विकृतं मनो यस्य तथाभूते इव रजनिकरे—चन्द्रे राजतीव—विराजमाने इव देवे—अमरे राजनि प्रभाकरवर्द्धने च दिवे—गगने स्वर्गे च ("द्यौ स्त्री स्वर्गे च गगने दिवं क्लीबं तयोः स्मृतम्" इति मेदिनी) सवितरि—सूर्ये जनके च। परिवृत्ते—परावृत्ते—विनिमयं तत्प्रायं विपर्यस्ते इत्यर्थः रजनीप्रबन्धे—निशागमे।

(२०६) प्रबुद्धेति—प्रबुद्धानाम्—जागरितानां शशिनि शव राज्ञां—नृपाणां हंसानामिव—अवलम्बदानामिव मण्डलानि—समूहाः तैः अन्यत्र—प्रबुद्धानां राजहंसानां—"राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्युक्तलक्षणानां

चचाल देवी हर्षः। (२०७) ततश्च नूपुररवविरामसूकमन्द-मन्दिरहंसेषु, शोकाकुलकतिपयकञ्चुकिमात्रावशेषेषु शुद्धान्तेषु, (२०८) पतितयूथपे इव वनगजचये कक्ष्यान्तरवर्त्तिनि पितृ-परिजने विषादिनि, उपरिरुदन्निषादिनि च स्तम्भनिषण्णे

---

हमविशेषाणां, सङ्खजे,—श्रेणीभिः, प्रबोध्यमानः,—सान्त्व्यमानः; अन्यत्र,—जागर्य-माणः, पङ्कजाकर इव—कासार इव, चचाल—उत्तस्थौ, भरापृष्ठात् इति शेषः। इह नृपादिषु हमत्वारोपनियतं रूपकं, श्लिष्टपदनिबन्धनपदश्लेषश्चाङ्गम्।

(२०७) "ततश्च" इत्यस्य "दह्यमानहृदि निर्जगाम राजकुलात्" इत्युत्तरेण सम्बन्धः। नूपुरेति।—नूपुराणां—मञ्जीराणां, रवस्य—शब्दस्य, विरामेण—अपगमेन, नृपवियोग-शोकेन पुराङ्गनाभिः भूषणादिपरित्यागादिति भावः, मूकाः,—निःशब्दाः, हंसानां नूपुरशिञ्जितानुकरणस्य कविवर्णनीयवस्तुषु प्रसिद्धेरिति भावः, अत्र तदभावात् मूकत्वं बोद्धव्यम्, मन्दाः,—अपटवः मन्दिरहंसाः,—गृहमरालाः येषु तथोक्तेषु। शोकेति।—शोकेन—दुःखेन, आकुलानि—विह्वलानि, कतिपयानि—अल्पानि कञ्चुकि-मात्राणि—सौविदल्ला एव, ("मात्रा कर्णविभूषायां वित्ते माने परिच्छदे। अक्षरावयवे स्वल्पे क्लीब कारत्स्न्येऽवधारणे॥" इति मेदिनी) अवशिष्यन्ते इति अवशेषाः येषु तथाविधेषु, राजप्रियाणां सर्वासां चिताऽऽरोहणाय परिजनानां परिचारिकाणामन्यासाञ्च ताभिः सह स्नानाय गमनादिति भावः, केवलमन्तःपुररक्षणार्थमेव तेषां तत्र स्थापनादिति तु फलितम्, शुद्धान्तेषु—अन्तःपुरेषु।

(२०८) पतितेति।—पतितः,—विनष्ट इत्यर्थः, यूथपः,—यूथपतिः यस्य तादृशे इव, वनगजचये—आरण्यगजवृन्दे, ["वनगजचये" इत्यत्र "वनगजयूथ" इति पाठोऽपि स एवार्थः] अत्र वनगजोक्तिः परिजनानां सहजधीरत्वसूचनार्थं भर्त्तरि एकान्तानुरक्तिप्रकटनार्थञ्च बोद्धव्या, कक्ष्यान्तरवर्तिनि—प्रकोष्ठान्तरस्थिते, पितृ-परिजने—पितृपरिचारकवर्गे, विषादिनि—विषादं गते। उपरीति।—उपरि—पृष्ठभागे, रुदन्—क्रन्दन्, निषादी—हस्तिपकः, हस्तिपाल इत्यर्थः यस्य तथोक्ते, ("आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः) स्तम्भनिषण्णे—आलान-स्तम्भमाश्रित्य स्थिते इत्यर्थः, ["सदिरप्रतेः" (८।३।६६ पा०) इति षत्वेन निषीदतेः निष्ठायां "रदाभ्यां—" (८।२।४२ पा०) इत्यादिना नत्वं, पूर्वदकारस्यापि नत्वं, ततः प्रथमस्य "रषाभ्यां—" (८।४।१ पा०) इत्यादिना द्वितीयस्य च "ष्टुना ष्टुः"

निष्पन्दमन्दे राजकुञ्जरे, (२०९) मन्दुरापालकाक्रन्दव्यथिते च अजिरभाजि राजवाजिनि, (२१०) विश्रान्तजयशब्द-कलकले च शून्ये च महास्थानमण्डपे दह्यमानदृष्टिः निर्जगाम राजकुलात्; अगाच्च सरस्वतीतीरं, (२११) तस्यां स्नात्वा पित्रे ददौ उदकम्। (२१२) अपस्नातश्च अनिष्पीडित-मौलिरेव परिधाय उद्गमनीयदुकूलवाससी, निश्वासपरः,

---

(८।४।४१ पा०) इति णत्वम्] निष्पन्दमन्दे—निस्तब्धे इति यावत्, राजकुञ्जरे—राजहस्तिनि।

(२०९) मन्दुरेति।—मन्दुरा—अश्वशाला, ("वाजिशाला तु मन्दुरा" इत्यमरः) तां पालयन्तीति ते मन्दुरापालकाः,—अश्वपाला इति यावत्, तेषाम् आक्रन्देन—रोदननिनादेन, व्यथिते—सन्तप्ते, ["मन्दुरापालकाक्रन्दव्यथिते" इत्यत्र "मन्दुरा-पालकाक्रन्दवधिते" इति पाठे,—मन्दुरापालकैः,—अश्वरक्षकैः, आक्रन्दः,—रोदन-ध्वनिः, वधितः,—व्यक्तीकृतः यत्र तस्मिन्नित्यर्थः] अजिरभाजि—अङ्गनवर्त्तिनि, ("अङ्गनं चत्वराजिरे" इत्यमरः) राजवाजिनि—राजघोटके।

(२१०) विश्रान्तेति।—विश्रान्तः,—विरतः, [विश्राम्यते स्म इति कर्त्तरि क्तप्रत्ययः] जयशब्दः,—जयध्वनिरेव, कलकलः,—कोलाहलः यस्मिन् तथोक्ते, शून्ये—निर्जने इत्यर्थः, महास्थानमण्डपे—प्रशस्तसभागृहे, ("सभासमितिसंसदः। आस्थानी क्लीबमास्थानम्" इत्यमरः) दह्यमानदृष्टिः,—भस्मीभूयमाननेत्रः, नित्यं जनकोलाहलमुखरितस्य पित्रा अधिष्ठितस्य सभागृहस्य एकमात्रस्य नृपस्याभावेन जनविरहिततया निस्तब्धत्वेन शून्यसिंहासनदर्शनेन च पितृशोकानलोद्दीपनादिति भावः। राजकुलात्—राजभवनात्, ("कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च ·· ·॥" इति मेदिनी)।

(२११) तस्या—सरस्वत्याम्। उदकं—तर्पणसलिलाञ्जलिं, ददौ—अर्पया-मास।

(२१२) "अपस्नात" इत्यस्य "भवनमाजगाम" इत्युत्तरेण सम्बन्धः। अप-स्नातः,—प्रेतकार्य्यमुद्दिश्य कृतस्नानः, अनिष्पीडितमौलिः,—न निष्पीडितः,—निर्जलीकृतः, अमोक्षित इत्यर्थः, मौलिः,—केशचयः येन तथोक्तः, ("चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः) उद्गमनीये—धौते, ("तत् स्यादुद्गमनीयं यत्

निश्चामरः, निरातपत्रः, निरुत्सारणः, समुपनीतेऽपि सप्तौ चरणाभ्यामेव (२१३) नासाऽग्रासक्तेन रक्ततामरसताम्रेण चक्षुषा हृदयावस्थितस्य अपि पितुर्दाहशङ्कया शोकाग्निमिव उद्गिरन्, अताम्बूलस्यापि सुचिरप्रक्षालितस्य कल्पतरुकिसलयस्य इव स्वभावपाटलस्य अधरस्य अधरपल्लवस्य प्रभया मांसरुधिरकवलान् इव हृदयाभिघातात् उद्वमन् उष्णनिश्वासमोचैः भवनम् आजगाम।

---

धौतयोर्वस्त्रयोर्युगम्" इत्यमरः) दुकूल—सितांशुके एव, ("दुकूल सूक्ष्मवस्त्रे स्याद्दुकूलं क्षौमे सितांशुके" इति शब्दार्णवः) वाससी—वस्त्रे परिधाय—परिहिते कृत्वा, निश्वासपरः,—पुनः पुनरायतं निश्वसन् इत्यर्थः, शोकदोषात् इति भावः। निश्चामरः,—चामरव्यजनरहितः, ["निश्चामरः" इति पाठः ग्रन्थान्तरे न दृश्यते, तथाऽपि तदसिद्धसम्बन्धत्वात् वक्ष्यमाणनिरातपत्रतयैव निश्चामरार्थप्रतीते इत्युक्तवदाम्]। निरातपत्रः,—छत्रवर्जितः, पित्रादिगुरुजनवियोगे छत्रचामरादिधारणनिषेधादिति भावः। निरुत्सारणः,—उत्सारणा—लोकानामपसारणं, तद्रहितः इत्यर्थः, राज्ञः गमनकाले रक्षिभिः पुरःस्थलोकाः अपसार्यन्ते इति नियमः, तदा तु सर्वेषामेव शोकविह्वलतया बान्धवबुद्ध्या भेदज्ञानाभावात् महापदि प्रभुत्वाभावाच्च तन्न कृतमिति भावः। समुपनीते—समुपस्थापिते, सप्तौ—अश्वे, ("... ...तुरङ्गाश्वतुरङ्गमाः। . .हयसैन्धवसप्तयः॥" इत्यमरः) चरणाभ्यामेव—पादचारेणैव मातापितृवियोगे ब्रह्मचर्यनियमपालनाय पादचारेण गमनस्य प्राशस्त्यादिति भावः।

(२१३) नासाऽग्रासक्तेन—नासिकाऽग्रलग्नेन, रक्ततामरसताम्रेण—रक्तकमललोहितेन। हृदयावस्थितस्य—हृदयमावस्थितस्य, न तु बहिर्जगतः इति भावः। अताम्बूलस्य—वर्जितताम्बूलस्य, सुचिरप्रक्षालितस्य—बहुधप्रधौतस्य, कल्पतरुकिसलयस्य इव—कल्पवृक्षपल्लवस्य इव, स्वभावपाटलस्य—सहजरक्तस्य अधरपल्लवस्य—अधरः,—हीनः, पराभूतः इत्यर्थः, पल्लवः—किसलयः यस्मात् तथोक्तस्य, अधरस्य—निम्नोष्ठस्य, यद्वा,—अधरस्य—निम्नावस्थितस्य, अधरपल्लवस्य—अधरः पल्लवः इव तस्य, मांसरुधिरकवलान् इव—पिशितरक्तग्रासान् इव, सरक्तमांसपिण्डानित्यर्थः। हृदयाभिघातात्—हृदये—चेतसि, अभिघातात्—आघातात्, शोकवज्रप्रहारजनित-

(२१४) राजवल्लभास्तु भृत्याः सुहृदः सचिवाश्च तस्मिन् एव अहनि निर्गत्य, प्रियं पुत्रदारम् उत्सृज्य, उदास्रैः बन्धुभिः वार्यमाणा अपि (२१५) बहुनृपगुणगणहृत-हृदयाः केचित् आत्मानं भृगुषु बबन्धुः, केचित् तत्रैव तीर्थेषु तस्थुः, केचित् (२१६) अनशनैः आस्तीर्णतृण-कुशा व्यथमानमानसाः शुचम् असमाम् अशमयन्, केचित् शलभा इव वैश्वानरं शोकावेगविवशा विविशुः, केचित्

---

चलतादिति भावः । उष्णनिश्वासमोचैः,—तप्तनिश्वासपातैः, [ "इत्थम्भूतलक्षणे" (२।३।२१ पा०) इति विशेषणे तृतीया ]।

(२१४) राजवल्लभाः,—राजप्रियाः । निर्गत्य—बहिर्गत्वा, भवनादिति शेषः । पुत्रदारम् अपत्यकलत्रादि । [ इह समाहारद्वन्द्वाविषयात् चुतसंस्कारतादृग्दोषः, शब्दाधस्समाधानन्तु 'गवाश्वप्रभृतीनि च' (२।४।११ पा०) इत्यत्र महाकविप्रयोगेणा-कृतिगणत्व प्रकल्प्य कथञ्चिन्निर्वाहितं ज्ञेयम् ] उदास्रैः,—उच्छ्रसन्नयनवारिभिः । वार्यमाणा—निषिध्यमानाः ।

(२१५) बाह्वति ।—बहुभिः,—प्रभूतैः, नृपस्य—राज्ञः, गुणगणैः,—दया-दाक्षिण्यादिसमूहैः, हृतानि—आकृष्टानि, हृदयानि—चेतांसि येषां तथाभूताः, भृगुषु—प्रपातेषु पर्वतस्य उच्चप्रदेशेषु इत्यर्थः, ("प्रपातस्तटो भृगुः" इत्यमरः) आत्मानं—स्वं बबन्धुः,—संयेमुः, तत्र पतनाय कृतहस्तादिबन्धना तस्थुरित्यर्थः । [ बबन्धुः" इत्यत्र बभञ्जुः" इति पाठः,—तत्र पतनेन आत्मानं चूर्णयामासुरित्यर्थः ]। तत्रैव—तेष्वेव, भृगुष्वेव इत्यर्थः, तीर्थेषु—पुण्यक्षेत्रेषु, यद्वा,—तत्रैव—राजपुरे एव, तीर्थेषु—पुण्यतटेषु न तु स्वदेशं स्थानान्तरं वा ज्ञात भावः । महाप्रभावस्य सर्वभूत-हितैषिणः राज्ञः लीलाचरत्वात् तस्याः पुण्यक्षेत्रत्वं बोद्धव्यम् ।

(२१६) अनशनैः—अभोजनैः प्रतीपवासैरित्यर्थः, आस्तीर्णतृणकुशा —आस्तीर्णाः —आच्छिताः तृणानि—नलादीनि, कुशाः,—दर्भाश्च ये तथाभूताः, तृणकुशास्तीर्णभूमौ स्थिता इत्यर्थः व्यथमानमानसाः,—पीडितचित्ताः असमाम्—अतुल्याम् शुचं—शोकम् अशमयन्—शमयामासुः, वनं गत्वा प्रपविषद्ध्यानाय अनशने स्थिता इति भावः । शलभा इव—पतङ्गविशेषा इव, वैश्वानरम्—अग्निं, शोकेति ।—शोकस्य—दुःखस्य, आवेगः,—सम्भ्रमः उत्कण्ठा इत्यर्थः, तेन विवशाः,—विह्वलाः ।

(२१७) दारुणदुःखदहनदह्यमानहृदया गृहीतवाचः तुषारशिखरिणं शरणं ययुः, केचित् (२१८) विन्ध्योपत्यकासु वनकरिकुलकरशीकरासारसिच्यमानतनवः पल्लवशयनशायिनः सन्तापम् अशमयन्, केचित् (२१९) सन्निहितान् अपि विषयान् उत्सृज्य सेवाविमुखाः परिच्छिन्नैः पिण्डकैः अटवीभुवः शून्या जगृहुः, केचित् पवनाशना धर्मधना धमन्यमनयो मुनयो बभूवुः, केचित् गृहीतकाषायाः

(२१७) दारुणेति।—दारुणेन—उत्कटेन, दुःखदहनेन—शोकाग्निना, दह्यमान—सन्तप्यमान, हृदय—चित्त येषां तथाभूता, गृहीतवाचः,—गृहीता—निगृहीता, संयमिता इत्यर्थ वाग् ये ते, मौनव्रतधारिण इत्यर्थ, ["स्त्रिया—" (६।३।३४ पा०) इत्यादिना पवद्भावे "ईषादिभाषा" (५।४।१५४ पा०) इति पाक्षिककबभाव] तुषारशिखरिणं—हिमाद्रि, शरणम्—आश्रय, ययुः,—प्रतस्थिरे, आश्रितवन्त इत्यर्थं, यतिनो जाता इति भाव। दग्धा अपि दाहज्वालाप्रशमनार्थं शीतलस्थानमाश्रयन्ति।

(२१८) विन्ध्येति।—विन्ध्यस्य—तदाख्यगिरे, उपत्यकासु—आसन्नभूमिषु, ('उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका" इत्यमर) वनेति।—वनकरिकुलानां—वनगजवृन्दानां करा—शुण्डा, तथा शीकरासारै,—अम्बुकणधाराभि, सिच्यमाना,—आर्द्रीक्रियमाणा, तनव,—शरीराणि येषां तथाभूता, पल्लवशयनशायिन—किसलयशय्याशायिन, सन्ताप—चित्तदाह शोकजमिति भाव, अशमयन्—निर्वापयामासु, वानप्रस्थाश्रम गृहीतवन्त इति भाव।

(२१९) सन्निहितान्—करस्थितानिति भाव, विषयान—भोग्यवस्तूनि, उत्सृज्य—त्यक्त्वा, सेवाविमुखा,—भोगपराङ्मुखा, परिच्छिन्नै,—परिमितै, पिण्डकै,—भक्तग्रासै तदुपलक्षिता इत्यर्थ, यद्वा—परिच्छिन्नै,—परिमितै, सन्धात्यर्थ, कृशैरिति भाव, पिण्डकै,—शरीरै, तदुपलक्षिता इत्यर्थं, शून्या—जनविरला, अटवीभुव,—वनभूमी जगृहु—आश्रिता। पवनाशना,—वायुभोजिन, धर्मधना,—धर्ममात्रधनकामा इत्यर्थ, धमन्यमनय—धमन्य,—काश्यात् तापस्य, स्नायव इत्यर्थ, धमन्य,—शिराजालानि येषां तथाभूता, अनेन व्रतकार्श्यं उच्यते। गृहीतकाषाया,—गृहीतम्—अवलम्बित, काषाय—कषायेण रक्तं वस्त्र

कापिलं मतम् अधिजगिरे गिरिषु, केचित् ( ३२० ) आचोटित-चूडामणिषु शिरःसु शरणीकृतधूर्जटयो जटा जघटिरे, अपरे ( ३२१ ) परिपाटलप्रलम्बचीवराम्बरसंवीताः स्वाम्यनुरागम् उज्ज्वलं चक्रुः, अन्ये ( ३२२ ) तपोवनहरिण-जिह्वाऽञ्चलोलिह्यमानमूर्त्तयो जरां ययुः, अपरे पुनः ( ३२३ ) पाणिपल्लवप्रमृष्टैः आताम्ररागैः नयनपुटैः कमण्डलु-भिश्च वारि वहन्तो गृहीतव्रता मुण्डा विचेरुः।

---

ये तथाभूता, कापिलं—कपिलसम्मतं साङ्ख्यशास्त्रम्, अधिजगिरे—अधीतवन्तः, साङ्ख्यशास्त्रमधीत्य प्रकृतिपुरुषतत्त्वावगमात् योगिनः बभूवुरिति भावः।

( ३२० ) आचोटितेति।—आचोटिता,—छेदिता, [ आङ्पूर्व्वकस्य चोटतेः णिचि निष्ठायां रूपम् ] अपसारिता इति भावः, चूडामणयः,—चूडारत्नानि येषु तथाभूतेषु, त्यक्तचूडारत्नालङ्कारेषु इति यावत्, शिरःसु—मूर्द्धसु, शरणीकृत-धूर्जटयः,—शरणीकृतः,—आश्रितः इत्यर्थः, धूर्जटिः,—हरः यैः तथाभूताः, गृहीत-पाशुपतव्रता इत्यर्थः। जघटिरे—बबन्धुः।

( ३२१ ) परिपाटलेति।—परिपाटलेन—परितो रक्तेन, प्रलम्बेन—आयतेन इत्यर्थः, चीवराम्बरेण—वसनखण्डेन, संवीताः,—प्रावृताः, आच्छादितदेहा इत्यर्थः, धृतमुनिवेशा इति भावः, स्वाम्यनुरागं—प्रभुभक्तिम्, उज्ज्वलं—भास्वरं, प्रशस्त-मिति यावत्।

( ३२२ ) तपोवनेति।—तपोवनहरिणानाम्—आश्रममृगाणां, जिह्वाञ्चलैः,—रसनाप्रान्तैः, उल्लिह्यमानाः,—आस्वाद्यमाना इत्यर्थः, मूर्त्तयः,—शरीराणि येषां तथाभूताः, तापसाः सन्तः इत्यर्थः, जरां—वार्द्धकम्।

( ३२३ ) पाणीति।—पाणि—करः, पल्लवः—इव—किसलयम् इव, तेन प्रमृष्टाः—प्रमार्ज्जनं नीताः, गृहीताश्च तैः, आताम्ररागैः,—आरक्तप्रभैः, शोका-वेगजनितरोदनात् महापुरुषलक्षणत्वेन स्वभावसिद्धत्वाच्च इति भावः, नयनपुटैः,—नेत्रगोलकैः, कमण्डलुभिः,—जलपात्रविशेषैः, वारि—अश्रुजलं, तीर्थजलञ्च। गृहीतव्रताः,—व्रतधारिणः, मुण्डाः,—मुण्डितशिरसः, विचेरुः,—भ्रमन्ति स्म। वीत-रागा अपि चिराभ्यस्तसंस्कारेण परलोकमध्येऽपि राजनि अत्यन्तानुरागा आसन् इति लोकातिशयशालिनी नरेन्द्रस्य कांचिदसाधारणी शक्तिः समर्थ्यते इति वस्तुध्वनिः।

(३२४) दैवमपि हर्षं तदवस्थं पितृशोकविह्वलीकृतं श्रियं शाप इति, महीं महापातकमिति, राज्यं रोग इति, भोगान् भुजङ्गा इति, (३२५) निलयं निरय इति, बन्धुं बन्धनमिति, जीवितम् अयश इति, देहं द्रोह इति, कल्यतां कलङ्क इति, आयुः अपुण्यफलमिति, आहारं विषमिति, विषममृतमिति, चन्दनं दहन इति, कामं क्रकच इति, हृदय-

---

(३२४) "दैवमपि हर्षम्" इत्यस्य "कुलपुत्रादय पर्यवारयन्" इति श्लेषेण सम्बन्ध । त विशिनष्टि, तदवस्थमित्यादि ।—श्रिय—राजलक्ष्मीं, शाप,—अभिसम्पात, दुःखाकर इति भाव, भोगानिस्पृहत्वादिति तात्पर्यम्, इति मन्यमानमित्यनेन सम्बन्ध, एवमुत्तरत्र । मही—पृथ्वीं, महापातक—महत् पाप, तदधिकारस्य केवलपापबहुलत्वादिति भाव । रोग,—व्याधि, क्लेशबहुलत्वादिति भाव । भोगान्—सुखसाधनानीत्यर्थ, भुजङ्गा —सर्पा, यातनाप्रदत्वादिति भाव ।

(३२५) निलय—गृह निरय —नरक, पितृत्यक्तस्य गृहस्य दुःखाकरत्वादिति भाव । बन्धु—स्वजन बन्धन—बन्धनहेतुभूत, तदनुरोधेन गृह त्यक्तुमसामर्थ्यादिति भाव । जीवित—जीवनधारणम्, अयश,—अकीर्तिकरम् इत्यर्थ, पितृशोकेनापि तदवलम्बनस्य निष्ठुरत्वबोधकत्वादिति भाव । देह—शरीर, द्रोह,—ऽनिष्टचिन्तन चानिष्टचिन्ताकर इति यावत्, कथमद्यापि न नश्यति ? तदाशौचमसहनीय सन्ताप मा न सोढु समर्थं भविष्यति इति भाव । कल्यता—निरामयत्वम्, आरोग्यमित्यर्थ, ("वार्त्ता निरामय कल्य" इत्यमर) कलङ्क,—अपवाद तादृशावस्थायामकुजातीसारादिकठिनरोगाक्रान्तस्यैवौचित्यादिति भाव । आयु —जीवितकालम्, अपुण्यफल—दुष्कृतपरिणाम, जीवत दुःखशतभोगस्य अपरिहार्यत्वादिति भाव । आहार—भोजन, विष—गरल पितृशोकाग्न्युद्दीपकत्वेन विषवत् विषादहेतुत्वादिति भाव । विष—गरलम्, अमृत—सुधा ('पीयूषममृत सुधा' इत्यमर ) अमृत यथा सन्तापनाशन तथा शोकदग्धजीवनस्य नाशन सन्तापप्रशमनात् अनिष्टकर विषदमपि वस्तु इष्टकरममृतप्रायममान इति भाव । चन्दन—श्रीखण्ड दहन —अग्नि, प्रभूतचन्दनलेपनेनापि पितृदाहाग्निस्मरणात् विरक्तानाम् उपभोगसाधनेषु स्पृहाया ईप्सितद्वेष्टृत्वाकलनाद्वा इति भाव । क्रकच,—करपत्र, भोगेच्छुतया करपत्रच्छेदनवत् यन्त्रणाप्रदत्वादिति

स्फोटनम् अभ्युदय इति च मन्यमानः, सर्व्वासु क्रियासु विमुखः (३२६) पितृपितामहपरिग्रहागताः चिरन्तनाः कुलपुत्राः, वंशक्रमाहितगौरवाश्च आप्तगिरो गुरवः श्रुति-स्मृतीतिहासविशारदाश्च जरद्द्विजातयः, (३२७) श्रुताभिजन-शीलशालिनो मूर्द्धाभिषिक्ताश्च अमात्या राजानः यथावत् अधिगतात्मतत्त्वाश्च संस्तुता मस्करिणः समदुःखसुखाश्च मुनयः, संसारासारत्वकथनकुशला ब्रह्मवादिनः, शोकापनयननिपुणाश्च पौराणिकाः पर्य्यवारयन्।

---

भावः ("क्रकचोऽस्त्री करपत्रम्" इत्यमरः)। हृदयस्फोटनं—वक्षोविदारणम्, अभ्युदयः—मङ्गलं तस्य स्वर्गलाभसाधकत्वादिति भावः। [ सर्व्वत्र निरङ्कुशपक्रमल ङार ] विमुखः पराङ्मुखः विरतमित्यर्थः।

(३२६) पित्रिति।—पिता च पितामहश्च ["मातृपितृभ्यां पितरि डामहच्" (वा० इति डामहच्। इह "आनङ् ऋतो द्वन्द्वे (६।३।२५ पा०) इत्यत्र ऋत इत्यस्य "ऋतो (६।३।२३ पा०) इत्यादित एवानुवृत्तिसम्भवेऽपि पुनरुपादानं "विद्यायोनिसम्बन्धवाचिनामृदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे परे" इति दीक्षितोक्तेः च सूत्रा० सम नवय च ऋकारान्तशब्दे परत एव आनङ् विधानात् अत्र तु पितामहशब्दस्य ऋकारान्तत्वाभावात् पूर्व्वपदस्य न आनङ् शङ्का करणीयेति सङ्क्षेपः] तयोः परिग्रहेण स्वीकारेण आश्रयदानेन इत्यर्थः आगताः—उपस्थिता इत्यर्थः, पालिता इति यावत् चिरन्तनाः—पुरातनाः प्राचीना इति यावत्, कुलपुत्राः,—सत्कुलजाताः अतो हितैषिणः इत्यर्थः। वंशेति।—वंशस्य—कुलस्य क्रमेण—पारम्पर्य्येण आहितम्—अर्पितं गौरवम्—सम्मानं येषां ते आप्तगिरः—हितानुबन्धितया स्वीकार्य्यवाचः उपदेष्टारः इत्यर्थः। जरद्द्विजातयः—वृद्धब्राह्मणाः, तुदाद्यहितावबोधज्ञानोपदेशेन प्रबोधदानकुशला इति भावः।

(३२७) श्रुतेति।—श्रुतं—शास्त्रज्ञानम् अभिजनः—कुलं शीलं—चारित्रं, तैः शालिनः—शोभमाना इति शेषः। मूर्द्धाभिषिक्ताः—मूर्द्धसु कृताभिषेकाः राज्ये प्रतिष्ठिता इत्यर्थः क्षत्रिया वा ("मूर्द्धाभिषिक्तो भूपाले मान्ये च क्षत्रियेऽपि च" इति मेदिनी) अमात्याः—मन्त्रिणः, मन्त्रिभूता इत्यर्थः राजानः—अधीश्वरनृपाः। यथावत्—यथाविधि। अधिगतेति।—अधिगतं—विदितम् आत्मतत्त्वम्—आत्म-

(३२८) अस्वतन्त्रीकृतश्च तैः मनसाऽपि न अलभत शोकम् अनुप्रचरितुम्। अनुनीयमानश्च कथञ्चिदपि आहारादिकासु क्रियासु आभिमुख्यम् अभजत। आत्मगतहृदयश्च अचिन्तयत्, —"अपि नाम तातस्य मरणं महाप्रलयसदृशम् इदमुपश्रुत्य आर्यो बाष्पजलस्नातो न गृह्णीयात् वल्कले? न आश्रयेद्वा राजर्षिः आश्रमपदम्? न विशेद्वा पुरुषसिंहो गिरिगुहाम्? (३२९) अस्रसलिलनिर्भरभरितनयननलिनयुगलो वा न

---

न्तमित्यर्थः यैः तथोक्ताः, ब्रह्मविद इत्यर्थः। संस्तुताः,—परिचिताः, ("संस्तवः स्यात् परिचयः" इत्यमरः) मस्करिणः,—भिक्षवः संन्यासिन इत्यर्थः, ("भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी" इत्यमरः) जगद्धिताय वैराग्यवार्तां भव्यपक्षपातित्वं लोकसिद्धमित्याशयः। समेति।—समे—तुल्ये, दुःख-सुखे—विषाद-सन्तोषौ येषां ते, सुखदुःखयोः समज्ञाना इत्यर्थः, मुनयः,—तापसाः। ब्रह्मवादिनः,—वैदान्तिकाः। पौराणिकाः,—पुराणपाठकाः, ते तु पुराणोक्ताख्यायिकावर्णनेन शोकानपनोदयितुमीशत। पर्यवारयन्—पर्यवेष्टन्त।

(३२८) तैः,—कुलपुत्रादिभिः पौराणिकान्तैः सर्वैरित्यर्थः, अस्वतन्त्रीकृतः,—अस्वाधीनीकृतः, क्षणमपि अमुक्त इत्यर्थः, शोकं—पितृविनाशजनितं मन्युम्, अनुप्रचरितुम्—अनुशीलितुम्, अनुभवितुमित्यर्थः, न अलभत—नाविन्दत, अवसरं नाविन्दत इदं। आभिमुख्यं—साम्मुख्यम्, प्रवृत्तिम् इत्यर्थः। आत्मगतहृदयः,—शोकापिहितचित्तः, आत्मनि मनसि कृतेत्यर्थः। अपि—प्रश्ने। नाम—सम्भावनायाम्। तातस्य—पितुः। आर्यः,—राज्यवर्द्धनः, बाष्पजलस्नातः,—अश्रुजलाप्लुतः, वल्कले—तरुत्वचौ, तपस्विपरिधेये इति भावः, न गृह्णीयात्?—न स्वीकुर्यात्? न परिदध्यात्? इत्यर्थः, पितृवियोगमाकर्ण्य शोकात् वल्कलवसने परिधाय वनं यास्यति इति सम्भावयामीति निष्कर्षः। एवमुत्तरत्रापि अपि नाम इत्यस्य अर्थः अवगन्तव्यः। राजर्षिः,—राजा ऋषिरिव, मुनिवत् जितेन्द्रियत्वादिति भावः, आश्रमपदम्—तपोवनम्। विशेत्—आश्रयेदित्यर्थः, [सर्वत्र "सम्भावनेऽलमिति—" (३।३।१५४ पा०) इति सूत्रेण सम्भावनायां लिङ्]। पुरुषसिंहः,—नरश्रेष्ठः।

(३२९) अस्रेति।—अस्रसलिलेन—बाष्पवारिणा, निर्भरम्—अतिमात्रं यथा तथा, भरिते—पूरिते, नयननलिनयुगले—नेत्रपद्मद्वये यस्य तथाभूतः, ["न

पश्येत् अनाथां पृथिवीम्? (२३०) प्रथमव्यसनविषमविष-विह्वलः न स्मरेत् आत्मानं वा पुरुषोत्तमः? (२३१) अनित्यतया जनितवैराग्यो वा न निराकुर्य्यात् उपसर्पन्तीं राज्यलक्ष्मीम्? (२३२) दारुणदुःखदहनप्रज्वलितदेहो वा न प्रतिपद्येत अभिषेकम्? इहागतो वा राजभिः (२३३) अभिधीयमानो न पराचीनताम् आचरेत्? (२३४) अतिपितृपक्षपाती खलु आर्य्यः, सर्व्वदा तातश्लाघया माम् अभिधत्ते,—

---

पश्येत" इत्यत्र "पश्येत्" इति नञ्रहितपाठे—पश्येत किम्? नैव द्रष्टुं शक्नुयात् इति सम्भावयामीति भावः]। अनाथाम्—निराश्रयां पतिवियोगादिति भावः।

(२३०) प्रथमेति।—प्रथमम्—आद्यम्, अपूर्व्वमिति भावः, व्यसनम्—विपदेव विषमम्—दारुणम्, विषं—हलाहलम्, तेन विह्वलः,—अधीरः, आत्मानम्—स्वं, वा न स्मरेत? आत्मघाती भवेदिति भावः। ["न स्मरेत" इत्यत्र "स्मरेत" इति नञ्रहितपाठे,—आत्मानं स्मरेत वा? आत्मा अवश्यमेव रक्षणीय इति स्मरेत् किम्? नैव स्मरेत् इति सम्भावयामि, अतः आत्मघाती भवेदिति भावः]। नारायणोऽपि प्रथमाविर्भूतमहागरलघोरप्रतापेन विमूढः क्षणमात्मानं विसस्मार इति पौराणिकाः। अत्र पुरुषोत्तमपदस्वरसात् उपमाध्वनिः शब्दशक्तिमूलकः, पुरुषोत्तम इव पुरुषोत्तम इति प्रतीतेः।

(२३१) अनित्यतया—क्षणिकतया, जनितवैराग्यः,—उत्पन्ननिर्वेदः। उपसर्पन्तीम्—उपगच्छन्तीम्, आश्रयन्तीमित्यर्थः। निराकुर्य्यात्—त्यजेदित्यर्थः, शोकेन विरागवता विषयादिषु निःस्पृहत्वदर्शनात् इत्याशयः।

(२३२) दारुणेति।—दारुणेन—उत्कटेन, दुःखदहनेन—शोकाग्निना प्रज्वलितः,—सन्तप्तः, देहः,—शरीरं यस्य तथाभूतः, अभिषेकम्—राज्याभिषेकमित्यर्थः, न प्रतिपद्येत वा?—न स्वीकुर्य्याद्वा? ["न प्रतिपद्येत" इत्यत्र "प्रतिपद्येत" इतिमात्रपाठे—स्वीकुर्य्यात किम्? इति काकुलभ्यार्थ, नैव प्रतिपद्येत इति सम्भावयामीति भावः]।

(२३३) अभिधीयमानः,—कथ्यमानः, अनुरुध्यमानः इति यावत्। पराचीनताम्—पराङ्मुखताम्, प्रातिकूल्यं वा इत्यर्थः, राज्याभिषेके इति भावः। ("पराङ्मुखः पराचीनः" इत्यमरः)।

(२३४) अतिपितृपक्षपाती—अतिशयेन पितृवत्सलः इत्यर्थः। तातश्लाघया—

(२२५) "तात! हर्ष! कस्यचित् अभूत् भविष्यति वा पुनः काञ्चनतालतरुप्रांशु कायप्रमाणम् इदम्? ईदृक् च दिवसकरप्रीत्या दिवसम् उन्मुखविकसितं मुखमहाकमलम्? एतौ च (२२६) वज्रस्तम्भभास्वरौ भुजकाण्डौ? एते च (२२७) हसितमदालसहलधरविभ्रमा विलासाः? कोऽन्यो मानी विक्रान्तो वदान्यो वा?" इति। एतानि च अन्यानि च चिन्तयन् दर्शनोत्सुकहृदयो भ्रातुः आगमनम् उदीक्षमाणः कथञ्चिदपि अतिष्ठत् इति।

इति श्रीबाणभट्टकृते हर्षचरिते प्रभाकरवर्द्धनमरणं नाम

पञ्चम उच्छ्वासः ॥ ५ ॥

---

ताते—पितरि, या श्लाघा—आदरः, तया, तद्गुणकर्मादीनां विशदस्मरणात् इत्याशयः। अभिधत्ते—वक्ति।

(२२५) तात!—वत्स! कस्यचित् जनस्य इति शेषः। काञ्चनेति।—काञ्चनतालतरु,—सौवर्णतालवृक्ष, तद्वत् प्रांशु—उन्नत, कायप्रमाणम्?—देहदैर्घ्यम्? ईदृक्—एवम्प्रकारम्, नान्यत् सदृशमिति भावः, दिवसकरप्रीत्या—सूर्यभक्त्या, सूर्यप्रेम्णा च, दिवसं—वासरं व्याप्य इत्यर्थः, [अत्यन्तसंयोगे द्वितीया] उन्मुख-विकसितम्—उन्मुखम्—उद्युक्तं, सूर्यप्रीतिकरकार्ये प्रवृत्तमित्यर्थः, तादृशञ्च तत् विकसितं—प्रफुल्लमित्यर्थः, भास्वरम् इति यावत्, अन्यत्र—उन्मुखम्—ऊर्ध्वमुखं, तत् विकसितं—प्रस्फुटितं, मुखमहाकमलं—मुखमेव महत् पद्मं, मुखं महाकमलमिव वा, [उपमितसमासः]।

(२२६) वज्रेति।—वज्रस्तम्भौ इव—कुलिशमयस्तम्भौ इव, भास्वरौ—दीप्तिमन्तौ, दृढत्वात् विशालत्वाच्च इति भावः, भुजकाण्डौ—भुजौ—बाहुयुगलं, काण्डौ—दण्डौ इव तौ, बाहुदण्डौ इत्यर्थः, ("काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु" इत्यमरः)।

(२२७) हसितेति।—हसितेन—हासेन मदालसस्य—मदविह्वलस्य, हलधरस्य—बलदेवस्य, विभ्रमा इव विभ्रमा—विचेष्टितानि येषु तथाविधाः, विलासाः,—लीलाविशेषाः। [कथमन्यः अन्यस्य विभ्रमं दधातु इति इह बिम्बप्रतिबिम्ब-बोधात् तन्निदर्शनानिदर्शनालङ्कारः], अन्यः, भवितुमर्हति इति शेषः, मानी—मानि-ष्ठः, विक्रान्तः,—शूरः, वदान्यः,—दानशौण्डः, ["स्युर्वदान्यस्थूललक्ष्यदानशौण्डा

# षष्ठ उच्छ्वासः ।

उच्चित्योच्चित्य भुवि प्रहितनिगूढात्मदूतनीतानाम् ।
विजिगीषुरिव कृतान्तः शूराणां सङ्ग्रहं कुरुते ॥ १॥

---

षट्पदः" इत्यमरः)। दर्शनेति।—दर्शनाय—अवलोकनाय, भ्रातुरिति भावः, उत्सुकम्—उत्कण्ठितं, साग्रहम् इति यावत्, हृदयं—चित्तं यस्य तथाविधं, उदीक्षमाणं,—प्रतीक्षमाणं ।

इत्यखिलशास्त्राटवीसञ्चरणपञ्चाननेन वात्स्यवंशावतंसेन पण्डितकुलपतिना बि, ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीमन्नित्यबोध
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायाञ्च सरलाख्यायां
श्रीहर्षचरितव्याख्यायां पञ्चम उच्छ्वासः ॥ ५ ॥

---

कृतान्ताचरणवर्णनव्यपदेशेन राज्यवर्द्धनस्य उपायहननं सूचयति, उच्चित्येति।—कृतान्तः,—अन्तकः, अन्यत्र,—कृतान्तः,—कृतः अन्तः,—नाशः प्रतिवीरस्येति भावः येन तथाभूतः, शशाङ्कनामा गौडाधिपतिरिति भावः विजिगीषुः इव—विजयार्थी नृप इव, भुवि—पृथिव्यां, उच्चित्य उच्चित्य—अन्विष्य अन्विष्य, प्रवरं प्रवरं विचित्य इति भावः, प्रहितनिगूढात्मदूतनीतानां—प्रहिताः,—प्रेषिताः, निगूढाः—गुप्ताः, अदृश्या इत्यर्थः, अन्यत्र—कपटचारिण इति यावत्, आत्मनः,—स्वस्य, दूताः,—किङ्कराः, अन्यत्र,—वार्त्तावहाः, निजचारा इति यावत् तैः नीताः,—वशं प्रापिताः, आनीता इत्यर्थः, स्वभवनमिति भावः तेषां, शूराणां—बलवतां, वीराणां मानवानामिति यावत्, अन्यत्र—शूराणां—राज्यवर्द्धनानुगतानां प्रधानराजपुत्राणां, सङ्ग्रहम्—आयत्ततां, कुरुते—स्वायत्तं करोति, अन्यत्र,—स्ववशान् करोति इत्यर्थः। एतेन शशाङ्कः निजदूतैः अन्विष्य अन्विष्य शूराणां सङ्ग्रहं कृत्वा दूतमुखेन कन्याप्रदानप्रलोभितं राज्यवर्द्धनं स्वगृहानीतं विश्रब्धं भुञ्जानं छद्मना व्यापादितवानिति षष्ठोच्छ्वासार्थः सूचितः। अत्र विजिगीषुणा सह कृतान्तस्य साधर्म्यं सम्यक्प्रतीतेरुपमालङ्कारः, कृतान्त इव कृतान्तः इत्युपमाध्वनिश्च, एतेन विजिगीषुः कालवत् कठोराशयः इति वस्तु व्यज्यते। आर्य्या वृत्तम् ॥ १ ॥

निकटोपकरणकलापे, (४) नीतेषु तीर्थस्थानानि सह जनहृदयैः कीकसेषु, (५) कल्पितशोकशल्ये सुधानिचयचिते चिताचैत्यचिह्ने, (६) वनाय विसर्जिते च महाजिजिति राजगजेन्द्रे, क्रमेण मन्देषु आक्रन्देषु, विरलीभवत्सु च विलापेषु,

पाठे,—अमत्राणि—पात्राणि, राजव्यवहृतसौवर्णभाजनादीनीत्यर्थः, "पात्रामत्रञ्च भाजनम्" इत्यमरः] पत्राणि—वाहनानि, रथाश्वशिबिकादीनि इति यावत् ("पत्रं वाहनपक्षयोः" इत्यमरः) शस्त्राणि—तलवार्य्यादीनि, एतानि आदीनि यस्य तथोक्तं, ["शेषाद्विभाषा" (५।४।१५४ पा०) इति समासान्त पाक्षिक कप्] नृपेति।—नृपस्य—राज्ञः, निकटानि—सततसन्निहितानि उपकरणानि—परिच्छदाः, तेषां कलापः,—समूहः तस्मिन् द्विजेभ्यः,—ब्राह्मणेभ्यः, दीयमाने—समर्प्यमाणे।

(४) कीकसेषु—अस्थिषु, ("कीकसं कुल्यमस्थि च" इत्यमरः) जनानां—लोकानां, हृदयैः—चित्तैः, सह—सार्द्धं, तीर्थस्थानानि—गङ्गादीनि, नीतेषु—प्रापितेषु।

(५) कल्पितेति।—कल्पितं—जनितं, शोकशल्यः—शोकः,—मन्युः, शल्यः—शङ्कुः, अस्त्रविशेष इवेत्यर्थः, मर्म्मपीडाकरत्वादिति भावः येन तादृशे, दर्शनमात्रेण शोकोद्दीपके इति यावत्, चिताचैत्यचिह्ने—चितायां—शवदाहार्थकाष्ठचुल्ल्यां, तदुपलक्षितस्थाने वा, चैत्यस्य—दारुमस्य, आयतनस्य वा ("चैत्यमायतनं तुल्ये" इत्यमरः) चिह्नं—लक्ष्म भस्मादिकं स्मारकरूपमित्यर्थः तस्मिन्, सुधानिचयेन—चूर्णद्रवसमूहेन, चिते—व्याप्ते, लिप्त इत्यर्थः, सुधाविधौते कृते इति भावः, यद्वा,—चिताचैत्यचिह्ने—चितायाः—चितोपरि, शवदाहनस्थाने इत्यर्थः, यत् चैत्यं—चितमेव चैत्यं, मृतकचैत्यमित्यर्थः, ("चैत्यं मृतकचैत्ये स्यात्" इति मेदिनी) शवदाहस्थानस्योपरि मृतस्य स्मरणार्थम् आयतनविशेष इति यावत्, तदेव चिह्नं—मृतस्य ज्ञापकविशेष तस्मिन्, सुधानिचयचिते—चूर्णलेपेन धवलीकृते इत्यर्थः, यद्वा—चिताचैत्यचिह्न—स्मारकमधारोपिताश्वत्थवृक्षादिकं तस्मिन्, सुधानिचयचिते—तन्मूलदृढ़ीकरणेष्टकया आविष्य दत्तचूर्णलेपे इत्यर्थः।

(६) महाजिजिति—उत्कटसङ्ग्रामजेतरि, राजगजेन्द्रे—राज्ञः—प्रभाकरवर्द्धनस्य, गजेन्द्रे—करिश्रेष्ठे, वाहनभूते इति भावः, वनाय—अरण्याय, विसर्ज्जिते—प्रेषिते, बन्धनविमुक्तीकृते इत्यर्थः, शोकजनकत्वेन द्रष्टुमशक्यत्वादिति भावः। ["विसर्ज्जिते च" इत्यत्र पुस्तकान्तरे "विसर्जिते" इति चकाररहितः पाठो दृश्यते। "क्रमेण"

(७) विश्राम्यति अश्रुणि, शिथिलीभवत्सु श्वसितेषु, अविस्पष्टेषु हा कष्टरवेषु, (८) उत्थाप्यमानासु च असनशय्यासु, उपदेशश्रवणक्षमेषु श्रोत्रेषु, (९) अनुरोधावधानयोग्येषु हृदयेषु, गणनीयेषु नृपगुणेषु, प्रदेशवर्त्तिताम् आश्रयति शोके, (१०) कृतेषु कविरुदितकेषु, जाते च सद्भावशेषदर्शने

---

इत्यत्र "क्रमेण च" इति चकारयुतश्च पाठान्तरम् ] आक्रन्देषु—रोदनेषु, मन्देषु—शिथिलीभवत्सु, विलापेषु—खिद्वचःसु, विरलीभवत्सु—ह्रासं गच्छत्सु, कालान्तरे शोकस्य क्रमाद्ह्रासात् इति भावः ।

(७) अश्रुणि—नेत्रवारिणि, विश्राम्यति—विरमति । श्वसितेषु—दीर्घनिश्वासेषु, शिथिलीभवत्सु—मन्दीभवत्सु । हा कष्टरवेषु—हा ! कष्टम् इति शब्देषु, अविस्पष्टेषु—अस्फुटेषु प्रायेण अश्रुतेषु इत्यर्थः ।

(८) असनशय्यासु—भूतशय्यासु, यासु राजा मृतः, यासु वा पुरा राज्ञा शयितं तासु इत्यर्थः, मरणानन्तरमशौचकालिकस्वजनशय्यासु कम्बलास्तरणादिषु इति वा, उत्थाप्यमानासु—अपसार्यमाणासु, यद्वा,—असनशय्यासु—असने—विपदि, राज्ञः पीडाकाले इत्यर्थः, या शय्या,—शयनीया, शोकावसन्नदेहतया निरन्तरं स्वजनैरध्यासिता शय्या इति यावत् तासु, उत्थाप्यमानासु—अपनीयमानासु, शोकशय्यां विहाय पुनः स्वकर्मणि प्रवृत्तेषु परिजनेषु इति भावः । श्रोत्रेषु—श्रवणेन्द्रियेषु, उपदेशश्रवणक्षमेषु—उपदेशग्रहणयोग्येषु इत्यर्थः, अविमनायमानेषु जनेषु इति भावः ।

(९) हृदयेषु—चेतःसु अनुरोधेति ।—अनुरोधेन—निर्बन्धेन, आग्रहेणेत्यर्थः, यद्वा,—अनुरोधे—अनुवर्त्तने, कस्यचित् प्रार्थितेष्टसम्पादनेच्छायाम् इत्यर्थः, ("अनुरोधोऽनुवर्त्तनम्" इत्यमरः) अवधानं—मनोयोगः, तस्य योग्यानि—उचितानि तेषु । नृपगुणेषु—राजगुणेषु, गणनीयेषु—सङ्ख्येयेषु, अल्पीयःसु इत्यर्थः, मरणानन्तरं प्रथमं शोकावेगेन विह्वले मनसि गुणानामगणनता क्रियते, क्रमेण शोकह्रासे तद्गणनता इति भावः । शोके—शुचि, प्रदेशवर्त्तिता—शयनगृहादिकप्रदेशमात्रनिष्ठताम्, आश्रयति—अवलम्बमाने, कश्चित् किमपि दृष्ट्वा श्रुत्वा वा मृतस्य स्मरणात् सञ्जातशोके लोके इति भावः ।

(१०) कविरुदितकेषु—कवि,—काव्यरचयितृ, रुदितानीव रुदितकानि—रोदनानि, रोदनवचनानि इति भावः तेषु, कृतेषु, जनैरिति शेषः, कवीनां [illegible]

इति (१४) वेपमानहृदयश्च पप्रच्छ प्रविशन्तम् अधिकतरप्रचारम् अन्यतमं पुरुषम्,—"भद्र ! कथय किमार्य्यः प्राप्तः ?" इति। स मन्दम् अब्रवीत्,—"देव ! यथाऽऽदिशसि, द्वारि" इति। श्रुत्वा च (१५) सौदर्य्यस्नेहनिहितनिरतिशयमन्युदूनमनाः कथमपि न ववाम वाष्पवारिप्रवाहोत्पीडेन सह जीवितम्।

(१६) अनन्तरञ्च द्वारपालमुक्तेन प्रथमप्रविष्टेन परिजनेन

---

(१४) वेपमानहृदयः,—कम्पमानान्तःकरणः, चिरात् प्रवासप्रत्यागतप्रियदिदृक्षोद्वेगेन, किं वाऽस्मदीयं अशुभं कथयिष्यन्ति इत्युद्वेगेन वा इति भावः। अधिकतरप्रचारम्—अधिकतरः,—अतिशयित इत्यर्थः, प्रचारः,—गतिर्यस्य तथाभूतम्। भद्र ! इति सम्बोधनम्। मन्दम्—शनैः, अनुच्चैरिति यावत्। यथा—यदित्यर्थः, आदिशसि—आज्ञापयसि, कथयसीत्यर्थः, अनुमिनोषीति यावत्, तथेति शेषः, आर्य्यः प्राप्त इति भावः। द्वारि—द्वारदेशे वर्त्तते इति शेषः।

(१५) सौदर्य्येति।—सोदरस्य—सहोदरस्य अयं सौदर्य्यः, स स्नेहः,—प्रणयातिशयः, यद्वा—समाने उदरे शयितः सोदर्य्यः—भ्राता, ["सोदराद्यः" (४।४।१०९ पा०) इति यप्रत्ययः] तस्मिन् यः स्नेहः,—प्रेम, तेन निहितः,—जनितः, निरतिशयः,—अत्यन्तः, मन्युः,—शोकः पितृमरणजः इति भावः. "स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति कुमारसम्भवे कालिदासः, तेन दूनं—क्लेशीकृतम्, आर्द्रीकृतमित्यर्थो वा, मनः,—चित्तं यस्य तथाभूतः, अतिविषण्णचित्त इत्यर्थः, विमथितहृदय इत्यर्थो वा, कथमपि—अतिकष्टेनेत्यर्थः, वाष्पेति।—वाष्पवारीणां—नेत्रजलानां, प्रवाहेण—स्रोतसा, अविरतप्रवृत्तनेत्रजलेनेत्यर्थः, यः उत्पीडः,—पीडनं तेन, जीवितं—जीवनं, न ववाम—न उज्जगार, कथमपि जीवनं दधारेति भावः। इह वाष्पवारिप्रवाहोत्पीडव्यवसायेन उक्तिप्रसिद्धिमतिक्रान्त्या तथा अतिशयोक्तिरलङ्कार इति सङ्क्षेपः।

(१६) "अनन्तरम्" इत्यस्य "ज्येष्ठं भ्रातरमपश्यत्" इत्यनेन सम्बन्धः। तं विशिनष्टि, द्वारेत्यादि।—द्वारपालैः,—दौवारिकैः, मुक्तेन—त्यक्तेन, त्यक्तमार्गेणेति यावत्, यद्वा—द्वारपालमुक्तेन—दौवारिकरक्षणनिरतेनेत्यर्थः, द्वारपालरक्षितेनेति यावत्, पूर्वं प्रायश्च तेषामेव दर्शनयोगात् इति भावः।

इव आक्रन्देन कथ्यमानं, (१७) दूरद्रुतागमनमुषितबाहुल्येन विच्छिन्नच्छत्रधारेण लम्बिताम्बरवाहिना (१८) भ्रष्टभृङ्गारग्राहिणा च्युताचमनधारिणा ताम्यत्ताम्बूलिकेन (१९) खञ्जत्खड्गग्राहिणा कतिपयप्रकाशदासेरकप्रायेण (२०) बहुवासरान्तरितस्नानभोजनशयनश्यामक्षामवपुषा परिजनेन परिवृतम्,

आक्रन्देन—रोदनध्वनिना, कथ्यमानम्—आगतो राज्यवर्द्धन इति निवेद्यमानम्।

(१७) दूरेति।—दूरात—दीर्घमार्गादित्यर्थः, द्रुतागमनेन—शीघ्रोपस्थित्या, मुषित—विप्रलब्धं, त्यक्तमिति यावत बाहुल्य—जनराशि यस्य तेन, अल्पसङ्ख्यकेन इत्यर्थः, विच्छिन्नच्छत्रधारेण—अतिक्रान्तच्छत्रधारिपुरुषेण, पश्चात्कृतच्छत्रधारिणेत्यर्थः, लम्बिताम्बरवाहिना—लम्बित—वेगागमनात् स्रस्तमित्यर्थः अम्बर—वसनं, वहति—धत्ते इति तथोक्तेन।

(१८) भ्रष्टेति।—भ्रष्ट,—दूरपतितः भृङ्गारग्राही—कनकालुकापरपर्य्यायकजलपात्रविशेषवाही यस्य तेन, [ "भृङ्गार भृङ्गारौ" ( उ० ३ पा० १३६ सू० ) इति भृञ आरन् नुमागमः गुक् ह्रस्वे च रूपम्। "भृङ्गारः कनकालुका" इत्यमरः ] च्युतेति।—च्युत,—स्खलितः, पथि स्थित इति यावत्, आचमनधारी—आचमनार्थजलग्राही यस्य तेन, ताम्यत्ताम्बूलिकेन—ताम्यन्—वेगगत्या क्लिश्यन् ताम्बूलिकः,—ताम्बूलदायी ताम्बूलग्राही वा यस्य तेन।

(१९) खञ्जदिति।—खञ्जन—द्रुतगमनेन विकलचरणः, खड्गग्राही—असिग्राही यस्य तेन, कतिपयेति।—कतिपये—अल्पे प्रकाशाः,—अत्युन्नतत्वात् दृश्यमाना इत्यर्थः, ये दासेरका—उष्ट्राः [ "मृगेरादयः" ( उ०१ पा० ६२ सू० ) इति दासतेः एरक्, ततः कन् ] यद्वा—प्रकाशाः,—मुख्याः, पादचारित्वात् मुख्या इति भावः ये दासेरकाः,—दासीपुत्राः [ "क्षुद्राभ्यो वा" ( ४।१।१३१ पा० ) इति ढक् ततः कन्। "दासेरकस्तु करभे दासीपुत्रे च धीवरे" इति मेदिनी ] तत्प्रायः—बाहुल्यं यस्मिन् तेन।

(२०) बह्विति।—बहूनि—अनेकानि वासराणि—दिवसान् व्याप्येत्यर्थः, अन्तरितेन—व्यवहितेन, परित्यक्तेन वा, अनुष्ठितेनेत्यर्थः, स्नानेन—आप्लवेन भोजनेन—आहारेण, शयनेन—निद्रया च, श्याम—मलिनं, क्षाम—क्षीणञ्च, वपुः,—शरीरं यस्य तेन, परिजनेन—पार्श्वचरेण जनेन, परिवृत—परिवेष्टितम्।

(२१) अविरलमार्गधूलिधूसरितशरीरतया शरणीकृतमिव अशरणया क्रमागतया वसुन्धरया, (२२) क्षणनिर्जयसमरशर-व्रणबद्धपट्टकैः दीर्घधवलैः समासन्नराज्यलक्ष्मीकटाक्षपातैः इव भवलोकितकायम्, (२३) अवनिपतिप्राणपरित्राणार्थमिव च शोकहुतभुजि हुतमांसैः अतिकृशैः अवयवैः आवेद्यमानदुःख भारम्, (२४) अपगतचूडामणिनि मलिनाकुलकुन्तले शेखर शून्ये शिरसि शुचम् आरूढां मूर्त्तिमतीम् इव दधानम्,

(२१) अविरलेति।—अविरलाभिः—सान्द्राभिः, मार्गधूलिभिः—अध्व रजोभिः धूसरितम्—ईषत्पाण्डुभूतं विवर्णमित्यर्थः शरीरं—देहः यस्य तस्य भावः तत्ता तया हेतुना अशरणया—अनाश्रयया क्रमागतया—वंशपरम्परागतया वसु न्धरया—पृथ्व्या शरणीकृतमिव—आश्रयः शरणं कृतमिव आश्रितमित्यर्थः।

(२२) क्षणेति।—क्षणानां—लघीयसां क्षत्रियाणां निर्जयाय—पराजय विजयाय च समरः—सङ्ग्रामः तस्मिन् शरः—शरप्रहारैः इत्यर्थः ये व्रणाः—क्षतानि तेषु बद्धानि—सन्नद्धानि पट्टकानि—पटीः इति वस्त्रभाषया प्रसिद्धानि तैः दीर्घधवलैः—आयतश्वेतैः कटाक्षपातोऽपि दीर्घधवलो भवति। समासन्नेति।—समासन्ना—समुपस्थिता या राज्यलक्ष्मीः तस्याः कटाक्षपातैः—अपाङ्गवीक्षणैः इव अवलोकितकायं—वीक्षितशरीरम् इह व्रणपट्टकेषु राजलक्ष्मीकटाक्षपात सम्भावनया उत्प्रेक्षा तद्गुणो व्यञ्जनेति सङ्कर

(२३) अवनीति।—अवनिपतेः—राज्ञः पितुरिति भावः प्राणानां—जीवनस्य परित्राणार्थम् इव—परिरक्षणार्थम् इव शोकहुतभुजि—शोकाग्नौ हुत मांसैः—हुतानि मांसानि—पिशितानि येषां तैः अत एव अतिकृशैः—अतिक्षीणैः अवयवैः—अङ्गैः आवेद्यमानेति।—आवेद्यमानः—ज्ञाप्यमानः दुःखभारः—शोकातिशय्यमिति यावत् येन तं शोकदाहात्मनिवेदितमित्यर्थः।

(२४) अपगतेति।—अपगतः—अपनीतः चूडामणिः—शिरोरत्नं यस्मात् तदाभूते मलिनाकुलकुन्तले—मलिनाः—मलदिग्धाः रूक्षा इति यावत् आकुलाः—विरलाः कुन्तलाः—केशाः यत्र तादृशे शेखरशून्ये—उष्णीषवर्जिते, रत्नदामाद्यङ्कितकिरीटवर्जिते इति यावत् आपीडबन्धहीने वा माल्यादिरहिते इत्यर्थः ("शिखास्वापीडशेखरौ" इति माल्यविवरणे अमरः) शुचं—शोकम् आरूढां

(२५) आतपगलितस्वेदराजिना रुदता इव पितृपादपतनोत्खचितेन ललाटपट्टेन लक्ष्यमाणं, (२६) प्रयीयसा वाष्पपय प्रवाहेण अभिमतपतिमरणमूर्च्छितामिव महीम् अनवरतं सिञ्चन्तम् (२७) अनल्पमन्तताश्रुप्रवाहनिपतननिम्नीकृतौ इव दुःखक्षामौ कपोलौ उद्वहन्तम् (२८) अत्युष्णमुखमारुतमार्गगतेन द्रवता इव गलिततांम्बूलरागेण अधरबिम्बेन उपलक्षितं,

---

—अ थता सवणव सर्वानुराग सह प्रायो दमनात इत्याशय केशाना काष्ठा प्रत्येचमेव श्रीकम्य नु "काष्ठाचाकीत्यचादिषु इत कावसमय सहलादत न्नम मू चमती—साचा"ग्रमानाम् दधान—धारयन्तम्

(२५) आत र त —अ तपेन—सूयमनूखन गलना—नि सृता स्वदराज —घम्मपरम्परा यस्मात तथोक्तन रुदता इव—अश्रू णि मुचता इव पितृ पदतत —पतनं —जनकस्य पादपतनाय—चरणे प्रणाम त न सतम् उत्कच्छितेन —उ ज्वन ललाटपट्टन—भालतटन [ करणे तृतीया ] लक्ष्यमाण—दृश्यमानम ।

(२६) प्रयोयसा—अ तावसननेन अ तप्रवृत्तनेन्यर्थ वाष्पपय प्रवाहण—अनुस्रोतसा इत्यथ अभिमतोत।—अ भमतस्य—इष्टस्य पत्य —भर्त्त राज्ञ इति भाव मरणेन—मत्यना मूर्च्छितामिव—नष्टचेतनामिव मही—पृथवीम अनवरतम—अ व च्छन्न यथा तथा सिञ्चन्त—वषन्त मूर्च्छापनोदनाय नीरानषेचनस्य भालोकसम्मतत्वात इति भाव ।

(२७) अनल्पेत —अनल्पेन—प्रभूतेन इत्यथ सन्ततेन—विस्ततेन अव च्छन्न त्यथ अनुप्रवाह नपतनेन—वाष्पस्रोतोनिपातनेन निम्नीकृतौ इव—नमता नीतो इव उन्नस्थानपतज्जल स्थलमपि निम्नीभवति दुःखक्षामौ—दःखन क्षीणौ कपोलौ—गण्डदेशौ उद्वहन्त—धारयन्तम्

(२८) अत्युष्ण त।—अत्युष्णस्य—अ तसन्तप्तस्य शोकवशादिति भाव मुख मारुतस्य—प्रश्वासस्य मार्ग—पन्थान गत —प्रचालत तेन द्रवता—द्रवीभूतेन सन्तापयोगादिति भाव गलितताम्बूलरागेण इव—गलित —प्रसृत ताम्बूलस्य—पर्णपत्रस्य राग —शोणिमा यस्मात तथाभूतेन इव अधरबिम्बेन—बिम्बफलाभिनोष्ठेन उपलक्षित—युक्तम् आरक्तोष्ठमिति भाव यद्वा —द्रवता—पद्यमानेनेव सन्तापभरादिति भाव गलितेति।—गलित —नष्ट, विराहत इत्यर्थ,

(२९) पवित्रिकामात्रावशेषेन्द्रनीलिकांशुश्यामायमानम् अचिर-श्रुतपितृमरणमहाशोकाग्निदग्धमिव श्रवणपाशम् उद्वहन्तम्, (३०) अस्फुटाभिव्यक्तव्यञ्जनेन अपि अधोमुख स्तिमित नयन-नील तारक मयूख माला खचितेन शोकप्ररूढश्मश्रुश्यामलेन इव मुखशशिना लक्ष्यमाणं, (३१) केसरिणम् इव महाभूभृ-द्विनिपातविह्वलनिरवलम्बनं, दिवसमिव तेजःपतिपतनपरि-

---

ताम्बूलराग,—पर्णभक्षणजनितरक्तिमा इति यावत् यस्मात् तथाभूतेन, पितृशोकात् त्यक्तताम्बूलेन विवर्णेन इति भावः।

(२९) पवित्रिकेति।—पवित्रिकामात्रं—विशुद्धतामात्रम्, उज्ज्वलतामात्रमित्यर्थः, न तु अलङ्कारार्थमिति भावः अवशेषः यस्याः तथाभूता, या इन्द्रनीलिका—नीलकान्तमणिविशेषः तस्याः अंशुभिः,—किरणैः, दुःखातिरेकात् कर्णभूषणानामपसारणेऽपि इन्द्रनीलमणिमात्रावशेषतया तदंशुभिरिति भावः, श्यामायमानं—श्याममिव आचरन्तम्, अत एव अचिरेति।—अचिरश्रुतस्य—अल्पदिनमात्राकर्णितस्य, पितृमरणस्य—जनकात्ययस्य, महाशोकाग्निना—प्रबलमन्युवह्निना, दग्धमिव—भस्मीभूतमिव, श्रवणपाशं—शोभनकर्णं, ["पाशः केशादिपूर्वः स्यात्तत्सङ्घे कर्णपूर्वकः। सुकर्णे च ॥" इति मेदिनी। "श्रवणपाशम्" इत्यत्र "श्रवणमध्यम्" इति पाठान्तरम्] उद्वहन्तं—दधानम्।

(३०) अस्फुटेति।—अस्फुटम्—अस्पष्टम्, ईषदित्यर्थः, अभिव्यक्तं—प्रकाशितं, व्यञ्जनं—लक्षणं, श्मश्रु इति यावत् यस्य तथाभूतेनापि, अधोमुखेति।—अधोमुखयोः—अवनतयोः स्तिमितयोः,—निश्चलयोः, नयनयोः,—चक्षुषोः, नीलानां—कृष्णानां तारकमयूखानां—तारांशूनां, तारकमयूखानामिव तारकमयूखानाम् इति निदर्शना, मालया—परम्परया खचितः,—व्याप्तः तेन, अत एव शोकेति।—शोकेन——शुचा, प्ररूढं—सञ्जातं, प्रवृद्धमित्यर्थः, चौरकर्माभावादिति भावः, यत् श्मश्रु—कूर्चं, मुखलोम इति यावत् तेन श्यामलः,—सकलङ्क इति यावत् तेन, मुखशशिना—वदनचन्द्रेण, [ कारणे तृतीया ] लक्ष्यमाणं—दृश्यमानम्।

(३१) केसरिणमिव—सिंहमिव, महदिति।—महान्—पराक्रान्त इत्यर्थः, उन्नतश्च, भूभृत्—राजा, गिरिश्च, तस्य विनिपातेन—विध्वंसेन, एकत्र,—मरणेन,

म्लानश्रियं श्यामीभूतं, नन्दनम् इव भग्नकल्पपादपं विच्छायं, दिग्भागमिव प्रोषितदिक्कुञ्जरशून्यं, गिरिम् इव गुरुवज्रपातदारितं कम्पमानं (३२) क्रीतमिव कश्मिना, किङ्करीकृतमिव कारुण्येन दासीकृतमिव दौर्मनस्येन, शिष्यीकृतमिव शोचितव्येन, (३३) आत्मीकृतमिव आधिना, मूकीकृतमिव मौनेन, पिष्ट-मिव पीडया, खिन्नमिव सन्तापेन, उच्छ्रितमिव चिन्तया, लुप्त-मिव विलापेन, धृतमिव वैराग्येण, प्रत्याख्यातमिव प्रतिसङ्ख्या-

---

अन्यत्र—पतनेन इत्यर्थः विह्वल—व्याकुलं निरवलम्बन—निराश्रयञ्च। दिवस-मिव वासरमिव तेज इति—तेजःपते—प्रतापवतो राज्ञः सूर्य्यस्य च पतनेन—मरणेन अस्तगमनेन च परिम्लाना—मलिना श्रीः—शोभा यस्य तम् अत एव श्यामीभूतं—मलिनकायम् अन्धकारमयीभूतञ्च। नन्दनमिव—देवोद्यानमिव भग्न-कल्पपादपं—भग्नः—विनष्टः इत्यर्थः कल्पपादपः—कल्पवृक्षवत् मनोरथपूरकः पिता यस्य तं भग्नकल्पतरुञ्च अत एव विच्छायं विगतप्रभं छायाशून्यञ्च। प्रोषितेति।—प्रोषितः—विनष्टः प्रवासं गतश्च दिक्कुञ्जरः—दिग्गजवत् दक्षो पिता दिग्गजश्च तेन शून्यं—विरहितं तम्। गुर्व्वित।—गुरुः—पिता वज्र इव—कुलिशमिव अनुदारकत्वादिति भावः तस्य पातेन—नाशेन अन्यत्र—गुरुणा—महता वज्रपातेन—कुलिशपतनेन दारितं—पाटितम् अत एव कम्प-मानं—वेपमानम्। मालोपमालङ्कारः।

(३२) कश्मिना—काश्येन क्रीतमिव—अधीनीकृतमिव अतिकृशमित्यर्थः। कारुण्येन—शोकेन किङ्करीकृतमिव—दासीकृतम् इव अतिशोकातुरमित्यर्थः। दौर्मनस्येन—दुःखितमनस्कतया दासीकृतं—भृत्यीकृतं दुर्मनायमानमित्यर्थः। शिष्यी-कृतमिव—अन्तेवासितां नीतमिव शोचितव्येन—शोकेन अतिशोकाकुलमित्यर्थः।

(३३) आत्मीकृतमिव—आयत्तीकृतमिव आधिना—मनःसन्तापेन अतीव मनःपीडितमिति निष्कर्षः। मूकीकृतमिव—निर्वचनीकृतमिव मौनेन—तूष्णीम्भावेन निरुद्धाकारमित्यर्थः। पिष्टमिव—पेषणं नीतमिव खिन्नमिव—पक्वमिव शोक-विवशमित्यर्थः। उच्छ्रितमिव—गृहीतमिव सदा चिन्तापरमित्यर्थः। लुप्तमिव—अदृष्टमिव विलापेन—पारम्पर्येण अविरतलग्नशोचनमित्यर्थः। धृतमिव—आश्रितमिव, वैराग्येण—निर्वेदेन, अनासक्तमिति भावः। प्रत्याख्यातमिव—

नेन, अवज्ञातमिव प्रज्ञया, (२४) दूरीकृतमिव दुरभिभवत्वेन, (२५) अबोध्येन वृद्धबुद्धीनाम्, असाध्येन साधुभाषितानाम्, अगम्येन गुरुगिराम्, अशक्येन शास्त्रशक्तीनाम्, अपथेन प्रज्ञाप्रयत्नानाम्, अगोचरेण सुहृदनुरोधानाम्, अविषयेण विषयोपभोगानाम्, अभूमिभूतेन कालक्रमोपचयानां शोकेन कवलीकृतं ज्येष्ठं भ्रातरम् अपश्यत्। (२६) आवेगोद्गतत्वरस्नेहोत्कलिकाकलापोत्क्षिप्यमाणकाय इव च परवशः समुदगात्।

---

निराकृतमिव, प्रतिसंख्यानेन—विवेकेन्वा मत्या, विवेकविमूढमिति भाव। अवज्ञातमिव—तिरस्कृतमिव, प्रज्ञया—बुद्ध्या, हतधियमित्यर्थः।

(२४) दुरभिभवत्वेन—दुरपनेयत्वेन हेतुना, यद्वा,—दुः,—दुःखेन, अभिभवः,—पराजयः, तस्य भावः तत्त्वं, दुर्जयत्वेनेत्यर्थः, दूरीकृतमिव—निराकृतमिव, सर्वाभिभवनीयाकारमिति भाव।

(२५) वृद्धबुद्धीनां—स्थविरमतीनां, प्राचीनत्वात् बहुदर्शिनीनामिति भावः, अबोध्येन—प्रबोधयितुमशक्येन इत्यर्थः। साधुभाषितानां—सज्जनवचनानां, सदुक्तानां वा, शान्तवचनानामित्यर्थः, असाध्येन—अनपनेयेन। गुरुगिरां—गुरुजनवचसाम्, अगम्येन—अविषयेण, अस्थानेन इति यावत्, गुरुजनप्रबोधवचसाऽपि अशमनीयेनेति भाव। शास्त्रशक्तीनां—शास्त्रज्ञानानामिति यावत् अशक्येन—असाध्येन, शास्त्रतत्त्वज्ञानसद्भावेऽपि धैर्यस्खलनं प्रतिपादयतेति भाव। अपथेन—अविषयेण, प्रज्ञाप्रयत्नानां—प्रज्ञाया—बुद्धेः प्रयत्नानां—प्रयासानां, विशिष्टज्ञाने सत्यपि अधर्य्यं वर्द्धयता इति भाव। अगोचरेण—अदृष्टेन, बन्धुजनानुरोधेनापि अनपगच्छता इति भाव। अविषयेण—अगोचरेण, विषयोपभोगानां—स्रक्चन्दनवनितादुपभोगानाम्, विषयसम्भोगे अनासक्तिं जनयता इत्यर्थः। कालक्रमेति।—कालक्रमेण—समयानुसारेण, ये उपचयाः,—वृद्धयः तेषाम्, अभूमिभूतेन—अनास्पदेन, कालक्रमेण समुदितः शोकः तादृक् हृदयविदारकः न भवति, यादृक् सद्यः प्रवर्द्धितः इति तात्पर्यं, सद्य एव प्रवर्द्धमानेन, न तु कालक्रमेण उपचयं गच्छता इति वा भाव। कवलीकृतं—ग्रस्तम्।

(२६) आवेगेति।—आवेगेन—सम्भ्रमेण उद्गतः,—उद्भूतः, त्वरः,—सम्भ्रमः, स्नेहः,—प्रेमा, तेन च उत्कलिकाकलापः,—उत्कण्ठातिशयः, तेन उत्क्षिप्यमाणः,—

अथ दूरादेव (३७) दृष्ट्वा देवो राज्यवर्द्धनः चिरकाल-कलितं वाष्पवेगं मुमुक्षुः सुदूरप्रसारितेन सङ्कलयन् इव सर्व्व-दुःखानि दीर्घेण दोर्दण्डद्वयेन गृहीत्वा कण्ठे मुक्तकण्ठं पुनः पतितक्षौमे क्षामे वक्षसि, पुनः कण्ठे, पुनः स्कन्धभागे, पुनः कपोलोदरे निधाय तथा तथा रुरोद, यथा सबन्धनानि इव उदपाट्यन्त हृदयानि। (३८) मृतनृपतिना राजवल्लभे-नापि प्रतिशब्दनिभेन निर्भरमिव अरुद्यत। सुचिराच्च कथ-ञ्चमपि निर्हृष्टनयनजलः पर्जन्य इव शरदि स्वयमेव उप-

---

कर्ष नीयमान, उत्थाप्यमान इत्यर्थ, काश,—देह यस्य तथाभूत इव, परवश,—विह्वल समुद्गात—समुत्तस्थौ, समुज्जगाम वा।

(३७) दृष्ट्वा, हर्षमिति शेष। चिरकालेति।—चिरकालकलित—चिरधृत, चिरनिरुद्धमिति यावत वाष्पवेगम्—अश्रुभर, मुमुक्षु,—त्यक्तुमिच्छु, [ 'सनाशंसभिक्ष उ' (३।२।१६८ पा०) इति सन्नन्तादुप्रत्यय ] सुदूरात—बहुदूरादेव, प्रसारितेन—विस्तारितेन, दीर्घेण—महता, आयतेनेत्यर्थ दोर्दण्डद्वयेन—बाहुदण्डयुगलेन, सर्व्वदुःखानि—पितृशोकजनितसन्तापसमूहान्, सङ्कलयन्निव—चिन्तयन्निव। मुक्तकण्ठम्—उच्चैरित्यर्थ। पतितक्षौमे—पतित—स्खलित क्षौम—पट्टोत्तरी यस्मात् तथाभूते क्षामे—क्षीणे। निधाय—संस्थाप्य हर्षमिति शेष, हर्षस्य वक्षःस्थलादौ स्वमुखं संस्थाप्य इति वा। सबन्धनानि इव—ससन्धिबन्धनानि इव सन्धिबन्धन सहितानि इव इत्यर्थ। उदपाट्यन्त—उच्छेदं प्राप्तानि इत्यर्थ, स्वयमेवाच्छिद्यन्त इति भाव, [ पाटयते कर्म्मकर्त्तरि रूपम् ]।

(३८) मृतेति।—मृत,—ज्ञानविषयतां नीत, कृतस्मरण इत्यर्थं नृपति,—राजा, प्रभाकरवर्द्धन इति यावत् येन तथाभूतेन, नृपतिं स्मरतेत्यर्थं, राजवल्लभेन—मृतस्य राज्ञ प्रियजनेन का कथा वल्लभजनस्य, सर्व्वैरपि अविशेषण इत्यापकारार्थं। प्रतिशब्दनिभेन—प्रतिध्वनिसदृशेन, राज्यवर्द्धनरोदनस्येति भाव, निर्भरमिव—अतिमात्रमिव। सुचिराच्च इति चकारेण पूर्व्ववाक्ये सम्बन्धाभावेऽपि इत पुन राज्य-वर्द्धनस्यैव सम्बन्धवत्त्व ख्याप्यते, निर्हृष्टनयनजल,—निःशेष यथा तथा, हृष्टानि—पातितानीत्यर्थं, नयनजलानि—नयनयो,—नेत्रयो, जलानि—अश्रूणि येन तथाभूत, यद्वा,—निर्हृष्टानि नयनयो जलानि अश्रूणि जलधरजलानीव येन, [ इत्युपमित-

शशाम। उपविश्य च (३९) परिजनोपनीतेन तोयेन तत्कर-नखमयूखपुञ्जतया महाजलप्लवजायमानफेनलेखमिव पुनः पुनः प्रमृष्टमपि (४०) पक्ष्माग्रसङ्गलग्नबिन्दुवृन्दमन्दोन्मेषमुषित-दर्शनं कथङ्कथम् अपि चक्षुरक्षालयत्। (४१) ताम्बूलिकोप-स्थापितेन च वाससा चन्द्रातपशकलेनेव उष्णवाष्पदग्धं वदनम् उन्ममार्ज। तूष्णीमेव च चिरं स्थित्वा उत्थाय स्नानभूमिम् अगात्। तस्याञ्च स्थित्वा (४२) विभूषं विलस्तव्यस्तकुन्तलं मौलिम् अनादरात् निष्पीड्य, सावशेषमन्युस्फुरितेन

---

समास ] पर्जन्य इव—निःशेषनिर्दृष्टाम्बुमेघ इव इन्द्र इव वा, स हि वर्षणं कारयति, ("पर्जन्यौ रसदब्देन्द्रौ" इति त्रिकाण्डशेषः) उपशशाम—शान्तिं लेभे, वर्षणव्यापारान्निवृत्त इत्यर्थः।

(३९) परिजनोपनीतेन—परिचारकसमुपस्थापितेन तोयेन—जलेन। तदिति।—तस्य—राज्यवर्द्धनस्य, करनखानां—हस्तनखराणां, मयूखपुञ्जः,—किरणराजिः, स्वच्छ इति भावः यस्मिन् तस्य भावः तत्ता तया हेतुना महादिति।—महाजले—जलराशौ, नेत्रसलिले इति भावः, प्लवेन—सन्तरणेन, जायमाना—उत्पद्यमाना फेनलेखा—फेनराजिः यस्मिन् तथाविधमिव प्रमृष्टमपि—प्रमार्जनं नीतमपि।

(४०) पक्ष्मेति।—पक्ष्मणां—नेत्रलोम्नाम्, अग्रेषु,—प्रान्तेषु, सङ्गलग्नाः,—निःसक्ताः, ये बिन्दवः—पृषताः ("पृषन्ति बिन्दुपृषताः पुमांसः" इत्यमरः) तेषां वृन्दैः,—समूहैः, मन्दः,—अल्पः, यः उन्मेषः,—उन्मीलनं, तेन मुषितं—हृतं दर्शनम्—अवलोकनव्यापारः यस्य तत्। अक्षालयत्—प्रामार्जयत् वेगवतां नयनप्रवाहाणां संस्तम्भनेन दुःखेन कथञ्चित् बाष्पमासीदित्याशयः।

(४१) ताम्बूलिकेन—ताम्बूलवाहिना, उपस्थापितेन—उपनीतेन, वाससा—वस्त्रेण, चन्द्रातपशकलेनेव—चन्द्रमयूखखण्डेनेव, वितानखण्डेनेव वा, शुभ्रेण स्वच्छतया शीतलेन इति भावः, उष्णेन—तप्तेन, बाष्पेण—अश्रुणा दग्धम्—उपतप्तम् ["उष्णबाष्पदग्धम्" इत्यत्र "उष्णोष्णबाष्पदग्धम्" इति पाठे—उष्णोष्णेन—अतितप्तेनेत्यर्थः] वदनम्—मुखम्, उन्ममार्ज—प्रमृष्टवान्।

(४२) विभूषं—भूषारहितम्। विलस्तेति।—विलस्ताः,—जडे छिन्नाः, इत्यर्थः,

जिजीविषता इव (४३) जलधौतसुभगम् आत्मानमपि चुचुम्बिषता इव अधरेण, चालितस्य चक्षुषः (४४) श्वेतिम्ना च शारदशशिकरविकसितविपदकुमुदवनदलावलिबलिविक्षेपैः इव दिग्देवताऽर्चनकर्म्म कुर्व्वाणः, (४५) चतुःशालवितर्द्दिकायां नीचापाश्रयविनिहितैकोपबर्हायां पर्य्यङ्किकायां निपत्य जोषम् अस्थात्।

देवोऽपि हर्षस्तथैव स्नात्वा (४६) धरणितलनिहितकुथा·

---

श्लथाः,—विमलाः, कुन्तलाः,—केशा यत्र तथोक्ते, मौलि—शिरःसयतकेशान्, धम्मिल्लकलाप इत्यर्थः, ("चूडा किरीटं केशाश्च संयता मौलयस्त्रय" इत्यमरः) अनादरात्—अयत्नात् महागुरोर्निपातादिति भावः, निष्पीड्य—प्रोञ्छ्य, निर्जलं विधायेत्यर्थः, सावशेषमन्युस्फुरितेन—सावशेषेण—अवशिष्टेन मन्युना—शोकेन, स्फुरितः,—स्पन्दित इत्यर्थः तेन, जिजीविषता इव—जीवितुमिच्छता इव, शोकाग्निदाहक्लेशादिति भावः।

(४३) जलेति।—जलेन—तोयेन, धौतः,—क्षालितः, अत एव सुभगः,—सुन्दरः तम्, आत्मानं—स्वम्, उत्तरोष्ठेन अधरोष्ठमिति भावः, चुचुम्बिषता इव—चुम्बितुमिच्छता इव।

(४४) श्वेतिम्ना—धावल्येन, शारदेति।—शारदः,—शरत्कालिकः, शशिकरः,—चन्द्रकरः तद्वत् तेन वा विकसितानि—प्रस्फुटितानि, विषदानि—स्वच्छानि, शुभ्राणि इत्यर्थः, कुमुदानि—उत्पलानि तेषां वनानि—समूहाः, तेषां दलावलयः,—पत्रराजय एव बलिविक्षेपाः,—पूजोपहारप्रक्षेपाः तैः इव दिग्देवताऽर्चनकर्म—दिग्देवतानां—दिगधिष्ठात्रीणां देवतानाम्, अर्चनकर्म—पूजनम्।

(४५) चतुःशालवितर्द्दिकायां—चतुःशाले—चतुर्दिगवस्थितगृहमण्डल्यां, या वितर्द्दिका—वेदिका तस्यां, ("स्याद्वितर्द्दिस्तु वेदिका" इत्यमरः) नीचेति।—नीचेषु—निम्नेषु, तलभागेष्विति यावत्, अपाश्रयस्य—चन्द्रातपस्य, विनिहितः,—स्थापितः, एकः,—अद्वितीयः, यद्वा,—एकः,—केवलः, न तु आस्तरणादिकं किञ्चिदासीदिति भावः, उपबर्हः,—उपधानं यस्यां तथोक्तायाम्। ("उपधानन्तूपबर्हः" इत्यमरः) जोषं—तूष्णीं, ("तूष्णीमर्थे सुखे जोषम्" इत्यमरः) अस्थात्—स्थितः। इह यथावद्गुरुजनतिरोधाने महापुरुषकर्त्तव्यवर्णनदर्शनात् स्वभावोक्तिरलङ्कृतिः।

(४६) धरणीति।—धरणितले—भूतले, निहितायाः—स्थापितायाः, कुथायां

प्रसारितमूर्त्तिः अदूरे एव अस्य तूष्णीमेव समवातिष्ठत। दृष्ट्वा दृष्ट्वा दूयमानमानसम् अग्रजन्मानं समस्फुटदिव अस्य सहस्रधा हृदयम्। (४७) औरसदर्शनं हि यौवनं शोकस्य। लोकस्य तु नरपतिमरणदिवसादपि दारुणः स बभूव दिवसः। सर्व्वस्मिन् एव नगरे न केनचित् (४८) अपाचि, न केनचित् अस्नायि, न अभोजि, सर्वत्र सर्व्वेण अरोदि। केवलम् अनेन क्रमेण अतिचक्राम दिवसः। (४९) स च प्रत्यग्र-त्वष्टृटङ्कतष्टतनुः इव वहद्बहलरुधिररसमांसच्छविः अपर-

—वर्णकम्बले, चित्रितकम्बलविशेषे इत्यर्थ, ("कुथं स्त्रीपुंसयोर्वर्णकम्बले पुंसि बर्हिषि" इति मेदिनी) प्रसारिता—विस्तारिता, मूर्त्तिः—तनुः येन तथाभूतः। अदूरे—निकटे। दूयमानमानसं—क्लिश्यमानचित्तम्। अग्रजन्मानं—ज्येष्ठम्। समस्फुटदिव—अदीर्यदिव, विदीर्णमभवदिवेत्यर्थः।

(४७) औरसदर्शनं—सहोदरदर्शनमिति भावः, यौवनं—प्रत्युद्दीपक-मिति भावः, शोकस्य—पितृमरणजस्य मन्योः। दारुणः—भीषणः, भयङ्कर इत्यर्थः। स दिवसः—राज्यवर्द्धनागमनदिनम् इत्यर्थः।

(४८) अपाचि—रन्धनं कृतम्। अस्नायि—स्नातम्। अभोजि—भुक्तम्। अरोदि—रुदितम्। क्रमेण—विधानेन, प्रकारेणेत्यर्थः, शोकविलापेनेति भावः, अति-चक्राम—गतः।

(४९) स च—प्रसिद्ध इत्यर्थः प्रत्यग्रेति।—प्रत्यग्रम्—अभिनवं यथा तथा, त्वष्टा—विश्वकर्म्मणा देवशिल्पिना इत्यर्थः, ("देवशिल्पिन्यपि त्वष्टा" इत्यमरः) टङ्केन—पाषाणदारणास्त्रविशेषेण, ("टङ्कः पाषाणदारणः" इत्यमरः) तष्टा—छष्टा, तनूकृता इत्यर्थः, [तक्षोतः कर्म्मणि निष्ठायां रूपम्। "तष्टं त्वष्टं तनूकृते" इत्यमरः] तनुः—शरीरं यस्य तथाभूतः इव निस्तेजा इवेत्यर्थः, पुरा विश्वकर्म्मणः सुता संज्ञा सूर्य्यगृहिणी पत्युस्तेजोऽतिरेकम् असहमाना विसोढुं पितरम् उपेत्य न्यवेदयत। स तु कन्यायाः क्लेशपरिजिहीर्षया सूर्य्यं जामातरं भ्रामयन्त्रे निधाय चीयतेजस्कम् अकरोत् इति पुराणवार्त्ता अत्र अनुसन्धेया, वहदिति।—वहन्—निःसरन् बहलः—बहुलः, रुधिररसः—रक्तद्रवः यस्मात् तादृशं, यत् मांसं—पिशितं, तस्येव छविः—कान्तिर्यस्य तथोक्तः, रक्तवर्ण इति यावत्, अतोऽप्याकार इति भावः,

पारावारपयसि ममज्ज मञ्जिष्ठारुणोऽरुणसारथिः। (५०) मुकुलायमानकमलिनीकोषविकलं चकार चञ्चरीककुलं कमलसरसि। (५१) सविधविरहव्याधिविधुरवधूबाध्यमानं बबन्ध बन्धौ इव विधुतबन्धूकभासि भास्वति भासा इव चक्रवाकचक्रवालम्। (५२) सञ्चरन्त्याः समधुकररवं कैरवाकरं कलहंसश्रेणीरमणीय माणिक्यकाञ्चीकिङ्किणीजालमिव

---

मञ्जिष्ठारुण,—मञ्जिष्ठा—समङ्गा, रक्तवर्णलताभेद इत्यर्थः, तद्वत् अरुण,—रक्त, अरुणसारथि,—सूर्य, अपरपारावारपयसि—पश्चिमसागरसलिले, ममज्ज—अवगाहत, अस्तम् अगमत् इत्यर्थः।

(५०) मुकुलेति।—मुकुलायमाने—मुकुलीभावमापन्ने, मुद्रिते इत्यर्थः, कमलिनीकोष—पद्मिनीबीजकोष विकल—विवश मुद्राग्रहसङ्कोचात् विह्वल वा इत्यर्थ बद्धमत भाव सूर्यास्तमनेन सह पद्मानां निमीलनात् मकरन्दरसानन्दानां बीजकोषगतानां भ्रमराणां पुटादिव ततः बहिरागमनाशक्यत्वादिति तात्पर्य चञ्चरीककुल—भ्रमरवृन्द [ फर्फरीकादयश्च (उ० ४ पा० २० सू०) इति यङ्लुगन्तात् चरतेः ईकन् निपातनात् चञ्चरीकः ] कमलसरसि—पद्माकरे, चकार—आतनुत कृतवान् [ आत्मनेपदाभावात् भौवादिकात् करोते रूपम् ]।

(५१) सविधेति।—सविधेन—सन्निहितेन, उपासनेन इत्यर्थः निरन्तरमिति भाव विरहव्याधिना—विच्छेदपीडया विधुरा—कातरा वधूः—चक्रवाकी इति यावत् बाध्यमानम्—अनुद्यमानमिति भाव चक्रवाकचक्रवाल—कोकमण्डल बन्धौ इव—सुहृदि इव प्रणामसम्पादनादिति भाव विधुतेति।—विधुत—विकसित यत् बन्धूक—तदाख्यपुष्पविशेष तद्वत् भास,—दीप्ति यस्य तस्मिन् भास्वति—रवौ भासा—प्रभया, इव—सह बबन्ध—निबद्ध कृतो न विदितं बन्धुत्व निबन्धन इति भाव। इह ... सान्ध्यान् ... सान्ध्यान् इत्यनुमानः

(५२) सञ्चरन्तीति।—कलहंसानां—कादम्बाख्यहंसविशेषाणां श्रेणी—पङ्क्ति, कलहंसीश्रेणी, (कादम्ब कलहंस इत्यमरः) ताभि रमणीय—मनोज्ञ, समधुकररवं—मधुकराणां—भ्रमराणां रव —ध्वनि तद्युक्तम् कैरवाकर—कुमुदवनम् कुमुदसर वा, सञ्चरन्त्या —...

याचकाण श्रियः। (५३) प्रकटकलङ्कम् उदयमानं विशङ्कट-विषाणोत्कीर्ण-पङ्क-सङ्कर-शङ्कर-शक्कुर शक्कर-ककुद-कूटसङ्काशम् अकाशत आकाशे शशाङ्कमण्डलम्।

अस्याञ्च (५४) वेलायाम् अनतिक्रमणीयवचनैः उपसृत्य प्रधानसामन्तैः विज्ञाप्यमानः कथङ्कथमपि अभुङ्क्त। (५५) प्रभातायाञ्च शर्वर्य्यां सर्वेषु प्रविष्टेषु राजसु समीपस्थितं हर्षदेवम् उवाच,—"तात! भूमिरसि गुरुनियोगानाम्। (५६) शैशव एव अग्राहि गुणवत्पताका इव भवता तातस्य

---

श्रिय,—लक्ष्म्या, शोभाया इति भाव, माणिक्येति।—माणिक्यस्य—रत्नविशेषस्य, काञ्ची—रशना, तस्या किङ्किणीजाल—क्षुद्रघण्टिकानिचय, याचकाणेव—रराणेव। तदानीं प्रदोषस्यागमात कुमुदाना विकाशेन लक्ष्म्या आविर्भावोऽभूत्, तेन हि तस्या किङ्किणीरणनमुत्प्रेक्षितमिति बोद्धव्यम्।

(५३) प्रकटकलङ्क—प्रस्फुटलाञ्छनम्, उदयमानम्—उद्गच्छत, विशङ्कटेति।—विशङ्कट—विशाल ("विशङ्कट पृथु बृहत् विशाल पृथुल महत्" इत्यमर) विषाण—शृङ्ग, तेन उत्कीर्ण,—उद्धृत, य पङ्क,—कर्दम, तेन सङ्कर,—सङ्ग यस्य तथाभूत शङ्करस्य—हरस्य, शक्कुरशक्करस्य—दान्तवृषभस्य, यत् ककुदकूटम—स्कन्धविशिष्टाग्रभाग पीवरास्थिमांसपिण्डमित्यर्थं, "कुँटी" इति वङ्गभाषया प्रसिद्ध, ("प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्" इत्यमर) तत्सङ्काश—तत्सदृश, मध्ये श्यामल धवलवृषभककुदमिवेति भाव, शशाङ्कमण्डल—चन्द्रबिम्बम्, आकाशे—गगने, अकाशत—व्यद्योतत।

(५४) वेलाया—समये। अनतिक्रमणीयवचनै,—अलङ्घ्यवाग्भि। विज्ञाप्यमान,—अनुरुध्यमान। कथङ्कथमपि—अतिकष्टेण इत्यर्थ, शोकच्छाया सत्यामपि माननीयस्य पितु प्रियसामन्तस्य शासनमनुल्लङ्घ्य इति भाव।

(५५) शर्व्वर्य्या—निशायाम ("अथ शर्व्वरी। निशा निशीथिनी रात्रि" इत्यमर) प्रभातायां—प्रात प्रकाशायाम्, अवसानायामिति भाव। राजसु—मित्रनृपसमूहेषु सामन्तराजवृन्देषु च। उवाच, राज्यवर्द्धन इति शेष। तात—वत्स! भूमि,—पात्रम। गुरुनियोगाना—गुरुजनादेशानाम्।

(५६) शैशवे—बाल्ये, अग्राहि—गृहीता, विदितविद्यावत्, गुणवत्पताका

चित्तवृत्तिं । यतो भवन्तमेवंविधं (५७) विधेय विधिविधानोपनतनैर्गुण्यम् इदं किमपि विभणिषति मे हृदयम् । (५८) न अवलम्बनीया बालभावसुलभा प्रेमविलोमा वामता । (५९) वैधेय इव मा कृथा प्रत्यूहम् ईहितेऽस्मिन् । न खलु न जानासि लोकवृत्तम् । (६०) लोकत्रयत्रातरि मान्धातरि मृते किं कृतं पुरुकुत्सेन ? (६१) भ्रूलतादिष्टाष्टादशद्वीपे दिलीपे वा रघुणा ?

---

इव—गुणशालिनी वर्द्धयन्ती इव तातस्य—पितुः चित्तवृत्तिं—मनोऽभिप्रायं, हृदयस्थितं वा निरन्तरं तदनुमताचाराद्यनुवर्त्तनात् इति भावः ।

(५७) विधेय—वचनेस्थित ("विधेयो विनयग्राही वचनेस्थित आश्रवः" इत्यमरः) विधेर्विधिः—दैवस्य विधानेन—विलसनेन उपनतम्—उपस्थितं नैर्गुण्यं—निष्कारणं वैराग्यमिति भावः यस्य तथाभूतम् इदं मे—मम, हृदयं चित्तं किमपि—यत्किञ्चित् इत्यर्थः विभणिषति—भणितुमिच्छति ।

(५८) बालभावसुलभा—शैशवसहजा । प्रेमविलोमा—प्रेम्णः—आह्लादस्य च्यावयित्री भावः विलोमा—विरोधिनी वामता—प्रतिकूलता अत्राध्याहार्यं, न अवलम्बनीया—न ग्रहणीया ।

(५९) वैधेय इव—मूर्ख इव ("मूर्खवैधेयबालिशाः" इत्यमरः) अस्मिन्—इष्टे ईहिते—वाञ्छिते प्रत्यूहं विघ्नं ("विघ्नोऽन्तरायः प्रत्यूहः स्यात्" इत्यमरः) । लोकवृत्तं—लोकाचारं न जानासि—न वेत्सि खलु—निश्चये इति न, जानास्यत्यर्थः । विधिदार्ढ्ये नकारद्वयं वामनाभिसम्मतम् इति ज्ञेयम् ।

(६०) लोकत्रयत्रातरि—त्रिलोकीत्राणक्षमे इति भावः मान्धातरि—तदाख्ये प्रसिद्धनृपतौ पुरुकुत्सेन—तत्पुत्रेण इत्यर्थः किं कृतम् ?—राज्यमेव गृहीतं न तु वनमाश्रितमिति भावः । एवमुत्तरत्रापि बोध्यम् ।

(६१) भ्रूलता—भ्रूलता—भ्रूभङ्ग इति भावः आदिष्टानि—आज्ञप्तानि अष्टादश द्वीपानि येन तथाभूते अष्टादशद्वीपाधिपतौ इति भावः ननु सप्तद्वीपा हि धरित्री श्रूयते लवणादीनि सप्त समुद्रे परिवेष्टितानि जम्बुप्रभृतीनि सप्त द्वीपानि भवन्तीति सत्यमेव द्वीपानामष्टादशत्वं महाकविप्रयोगे यथा हि—"अष्टादशद्वीपनिखातयूपः" इति रघौ कालिदासः, दिलीपे—तदाख्ये इक्ष्वाकुवंश्ये राजनि मृते इति शेषः रघुणा—तत्पुत्रेण इत्यर्थः किं कृतम् ? इति पूर्ववदन्वयः ।

(६२) महासुरसमरमध्याध्यासितविदशरथे दशरथे वा रामेण ? (६३) गोष्पदीकृतचतुरुदन्वदन्ते दुष्मन्ते वा भरतेन ? तिष्ठन्तु तावदेते, (६४) तातेनैव शतसमधिकाध्वरधूमविसरधूसरितवासववयसि (६५) सुगृहीतनाम्नि तत्रभवति परासुतां गते पितरि किं न अकारि राज्यम् ? यत्र किल शोकः (६६) समभिभवति, तं कापुरुषम्

(६२) महासुरेति।—महासुराणां—दैत्यप्रवराणां, समरमध्ये—रणाभ्यन्तरे, अध्यासित,—स्थापित, अधिष्ठित इत्यर्थः, विदशरथ,—देवरथः येन तथाभूते, इन्द्रसाहाय्यार्थम् असुरान् हन्तुम् अध्यासितदेवरथे इति भावः दशरथे, मृते इति शेष, रामेण—तत्पुत्रेण इत्यर्थः, किं कृतम् ? इति पूर्वेणान्वयः।

(६३) गोष्पदीति।—गोष्पदीकृता,—गोः पदं, प्रमाणं, गावः पद्यन्ते यस्मिन् देशे इति वा गोष्पदं—गोः पदजातं गर्त्तं इत्यर्थः, ["गोष्पदं—" (६।१।१४५ पा०) इत्यादिना प्रमाणसेवितार्थयोरव निपातनम्] अगोष्पदं गोष्पदं कृता गोष्पदीकृता,—गोष्पदवत् तुच्छीकृता इत्यर्थः, अवहेलयैव उल्लङ्घिता इति भावः, चतुर्णाम् उदन्वतां—समुद्राणाम्, अन्ता,—सीमा येन तथाभूते, ससागरधराधीश्वरे इत्यर्थः, दुष्मन्ते—चन्द्रवंशीयप्रसिद्धनृपविशेषे, मृते सति इति शेषः, भरतेन—तत्पुत्रेण इति यावत्, किं कृतम् ? इति पूर्वेणान्वयः। तिष्ठन्तु—दूरे सन्तु, बहुतीतकालिकत्वादेतेषामिति भावः, एते—मान्धात्रादयः।

(६४) तातेन—पित्रा, प्रभाकरवर्द्धनेन इति भावः, शतेति।—शतात्—शतसङ्ख्याकेभ्यः, समधिका,—अतिरिक्ताः, अध्वराः,—यज्ञाः, अश्वमेधादय इति यावत्, तेषां धूमविसरैः,—धूमावलीभिः, यज्ञाग्निसमुत्थधूमैरित्यर्थः, धूसरित—मलिनीकृतं इत्यर्थः, वासवः—इन्द्र एव, वयः,—पक्षी येन तथाभूते ("वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्" इति मेदिनी) धूमोद्गमेन हि वस्त्राणि पक्षिणश्च धूम्रीक्रियन्ते अस्य तु यज्ञानां तथा भूमोद्गतिर्जाता, यथा स्वर्गाधिपतिरपि धूसरताम् अयासीत् इति भावः।

(६५) सुगृहीतनाम्नि—सुष्ठु गृहीतं, जनैरिति शेषः, नाम यस्य तथाभूते, प्रातः स्मरणीये इत्यर्थः, तत्रभवति—पूज्ये, पितरि—अस्मत्पितामहे इति भावः, परासुतां—पञ्चत्वं, गते—प्राप्ते सति राज्यं किं न अकारि ?—न कृतं किम् ?

(६६) समभिभवति—परिभवति, आयत्तीकरोतीत्यर्थः। कापुरुषं—पुरुषा॰

आचक्षते शास्त्रविदः। स्त्रियो हि विषयः शुचाम्। तथाऽपि किं करोमि, स्वभावस्य सेयं कापुरुषता वा, (६७) स्त्रैणं वा, यदेवम् आस्पदं पितृशोकहुतभुजो जातोऽस्मि। मम हि (६८) भूभृति पर्य्यस्ते निरवशेषतः प्रस्रवणानि इव स्रुतानि अश्रूणि, अस्तमिते (६९) महति तेजसि अन्धकारीभूतदशाशस्य प्रनष्टः प्रज्ञालोकः, प्रज्वलितं हृदयम्, (७०) आत्मदाहभीत इव स्वप्नेऽपि न उपसर्पति विवेकः, बलीयसा सन्तापेन (७१) जातुषमिव विलीनम् अखिलं धैर्य्यं, (७२) पदे पदे दिग्धरोपाहता इव हरिणी मुह्यति मतिः, पुरुषद्वेषिणी इव

---

श्रमम्। विषय—देश, पात्रमित्यर्थः, शुचा—शोकानां स्त्रिय एव शोकविवशा भवितुमर्हन्ति न तु पौरुषभूषिता पुरुषा इति भाव। तथाऽपि—स्त्रीणामेव शोकविषयत्वे सत्यपि। स्वभावस्य—प्रकृते। कापुरुषता—नीचता।

(६७) स्त्रैणं—स्त्रीसुलभत्वम्। आस्पद—पात्र, चैतमित्यर्थः। पितृशोकहुतभुज—पितृशोकानलस्य।

(६८) भूभृति—राज्ञि, पर्व्वते च पर्य्यस्ते—विध्वस्ते, निरवशेषत,—कार्त्स्न्येन, प्रस्रवणानि इव—निर्झरा इव, स्रुतानि—गलितानि।

(६९) महति—प्रभूते, तेजसि—तेजःसम्पन्ने पितरि सूर्य्ये च। अन्धकारीभूतदशाशस्य—अन्धकारीभूता—ध्वान्तसमाच्छन्ना इत्यर्थ, दश आशा,—दिशो यस्य तादृशस्य, ममेति पूर्व्वेणान्वय, दशापि दिशोऽन्धकारमयो इव पश्यामि इत्यर्थः। प्रनष्ट,—अदर्शनं गत, विलुप्त इत्यर्थः, प्रज्ञा—बुद्धि एव आलोक,—उद्योत।

(७०) आत्मेति।—आत्मन,—स्वस्य, दाहात्—ज्वलनात्, भीत,—जातातङ्क. प्रज्वलितहृदये उपस्थिता इति भाव। उपसर्पति—उपगच्छति, आविर्भवतीत्यर्थः, विवेक,—पृथगात्मता, इदं तथ्यमिदमतथ्यम् इत्यादि विचारवती बुद्धिरित्यर्थः।

(७१) जातुषमिव—लाचानिर्म्मितमिव, [जतुनो विकार अण् षुगागम। "लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामय" इत्यमर] विलीन—विलय गतम्।

(७२) पदे पदे—प्रतिपदं, प्रत्येकशब्दोच्चारणे, प्रत्येकपदक्षेपणे च इत्यर्थः, दिग्धेति।—दिग्धेन—विषाक्तेन, रोपेण—इषुणा, शरेणेत्यर्थः, ("कलम्बमार्गणशराः

दूरत एव भ्रमन्ती परिहरति स्मृतिः, अम्बा इव तातेनैव सह गता धृतिः, (७३) वार्द्धुषिकप्रयुक्तानि इव वित्तानि प्रतिदिवसं वर्द्धन्ते दुःखानि, (७४) शोकानलधूमसम्भारसम्भूताम्भोधरभरितमिव वर्षति नयनवारिधाराविसरं शरीरम्। सर्वं (७५) पञ्चजनः पञ्चत्वमुपरतः प्रयाति, वितथमेतद्वदति बालो

पत्री रोप इषुर्द्वयोः" इत्यमरः) यद्यपि बाणे विषाक्ते दिग्धलिप्तकौ" इत्यमर वचनात् दिग्धशब्देनैव विषाक्तो बाणो लभ्यते तथापि पुनः रोपग्रहणं तस्य अति-शीघ्रगत्वद्योतनार्थमिति बोद्धव्यम्। आहतेव—विद्धेव मुह्यति—मोहं गच्छति। पुरुष द्वेषिणी इव—पुरुषं दृष्ट्वा पलायनपरा कामिनी इव इत्यर्थः। भ्रमन्ती—चलन्ती पलायमाना इत्यर्थः। परिहरति—परित्यजति मामिति शेषः। अम्बा इव—माता इव। धृतिः—सन्तोषः।

(७३) वार्द्धुषिकेति।—वृद्धिः—ऋणादौ प्रयुक्तेभ्यः धनेभ्यः लाभरूपया जीवतीति वार्द्धुषिकः—वृद्ध्याजीवः कुसीदजीविवणिक् इत्यर्थः ["प्रयच्छति गर्ह्यम्" (४ ४ ३० पा०) इति वृद्ध ठकि "वृद्धेर्वृधुषिभावो वक्तव्यः" (वा०) इति वृधुषि-वृद्धौ रूपम्। "कुसीदको वार्द्धुषिको वृद्ध्याजीवश्च वार्द्धुषिः इत्यमरः] तेन प्रयुक्तानि—कालान्तरे कार्ये ऋणादिरूपे नियुक्तानि इव वित्तानि—धनानि। वर्द्धन्ते—वृद्धिं गच्छन्ति।

(७४) शोकेति।—शोकानलस्य—शोकाग्नेः धूमसम्भारैः—धूमनिवहैः, सम्भूतः—सञ्जातः योऽम्भोधरः—मेघः तथा हि मेघदूते—"धूमज्योतिःसलिल-मरुतां सन्निपातः क्व मेघः" इति कालिदासः तेन भरितमिव—आपूरितमिव, शरीरं—देहः अनेन विशेषणेन तात्पर्यबलात् गगनाकृति च आयातम्, एतेन शरीरस्य उत्साहशक्त्यादिशून्यता व्यज्यते। नयनवारिधाराविसरं—बाष्पधारासन्तानं, वर्षति—मुञ्चति [इत्युत्प्रेक्षोत्थापितपूर्वपदार्थस्य उत्तरवाक्यगतत्वेन पदार्थहेतुक काव्यलिङ्गमुत्प्रेक्षाङ्गमिति सङ्करः]।

(७५) पञ्चजनः—पञ्चभूतनिर्मितो मानवः ("स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः" इत्यमरः) उपरतः—मृतः सन् पञ्चत्वं—पञ्चानां क्षित्यादीनां भावः तत्त्वं पञ्चसु पृथिव्यादिषु विलयरूपतामित्यर्थः ("पञ्चत्वं पञ्चानां भावे प्राणानामत्यये ऽपि च" इति मेदिनी) प्रयाति—गच्छति। वितथम्—असत्यम्। बालः,—मूर्खः अज्ञः इति यावत् ("मूर्खेऽर्भकेऽपि बालः स्यात्" इत्यमरः)।

लोकः; (७६) तातो हुताशनतामिव केवलमापन्न, येनैवं दहति माम्। इदमसाम्परायिकमिव हृदयमवष्टभ्य व्युत्थितः शोको दुर्निवारं बाडव इव वारिराशिं, पविरिव पर्व्वतं, क्षय इव क्षपाकरं, राहुरिव रविं, दहति दारयति तनू-करोति कवलयति। न शक्नोति मे हृदयं साहसस्य सुमेरु-कल्पस्य महापुरुषस्य विनिपातम् अश्रुभिरेव केवलैः अतिवाह-यितुम्। राज्ये (७७) विषे इव चकोरस्य मे विरक्तं चक्षुः।

---

(७६) कथं त्रितयं वदति? इत्यत आह तात इति।—तातः,—पिता, [केचित्तु "तात" इत्यत्र "तत" इति पठित्वा "पञ्चसु पृथिव्यादिषु लयात् पुरुष ताद्रूप्यं प्रतिपद्यते इत्युक्तं यत, ततः,—इत्याद्यभिमानपातवद्भावादयमादित्यश्" इति व्याचख्युः] हुताशनताम्—अग्नित्वमेव, न तु पृथिव्यादित्वमित्येवकारार्थः आपन्नः,—प्राप्तः केवलं हुताशने एव लयं गत इत्यर्थः, येन—हुताशनभावेन इत्यर्थः। इह दाहस्य साधनस्यापरत्वज्ञानात् अनुमितमिव दाहकत्वं इति प्रतीयमानोऽयमत्र चमत्कारातिशयात्। असाम्परायिकमिव—अयुक्तमिव असाम्प्रतिकं वा, यद्वा,—असाम्परायिकम्—साम्परायिकं—युद्धं ("युद्धमायोधनं। समीकं साम्परायिकम्" इत्यमरः) तदर्हति इति असाम्परायिकं युद्धानर्हं सभयमित्यर्थः, इदं हृदयं—चित्तम्, अव-ष्टभ्य—आक्रम्य व्युत्थितः,—विशेषेण उत्थितः, शोकः—मन्युः दुर्निवारः,—दुर्नि-वार्यः, यो हि भीतः, स कथं व्युत्थितं निवारयितुमर्हति? इति भावः, बाडव इव—बडवानल इव वारिराशिं—समुद्रं पविरिव—वज्रमिव, ("ह्रादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः" इत्यमरः) क्षय इव—राजयक्ष्मा इव क्षपाकरं—चन्द्रं दहति—ज्वलयति दारयति—भिनत्ति, छिनत्तीत्यर्थः द्विधा विदारयतीति वा तनूकरोति—कृशीकरोति कवलयति—ग्रसति, सर्वत्र मामिति शेषः। "बाडव" इत्यादिवाक्येषु "दहति" इत्यादिक्रियाणां क्रमेणान्वयः। सुमेरुकल्पस्य—सुमेरुपर्वतनिभस्य, सत्त्वगुरुत्वस्यात्, आश्रिताभीष्टपूरकत्वाच्चेति भावः। अति-वाहयितुं—यापयितुं शमयितुमित्यर्थः, न्यग्भावयितुमिति वा, शीकरवाहि न महागिरीन्द्रः परिचालनार्हः इत्याशयः।

(७७) विष इव—गरले इव, ["इवेन समासो विभक्त्यलोपश्च" (वा०) इति एकपदीभावः, सन्धिरेव केवलं पाठान्तरे दृश्यते इति] चकोरस्य—पक्षिविशेषस्य,

(७८) बहुमृतपटावगुण्ठना रञ्जितरङ्गा जनङ्गमानामिव वध्यवाह्याम् अनार्यां श्रियं त्यक्तुमभिलषति मे मनः। क्षणमपि (७९) दग्धगृहे शकुनिरिव न पारयामि स्थातुम्। सोऽहमिच्छामि, मनसि (८०) वाससीव सुलग्नं स्नेहमलमिदम् अमलैः शिखरिशिखरप्रस्रवणस्वच्छस्रोतोऽम्बुभिः क्षालयितुम् आश्रमपदे।

---

विषे दृष्टे चकोरस्य अक्षिणी विरज्यते इति प्रसिद्धिः। विरक्तम्—अनासक्तं रक्तिम-विरहितञ्चेत्यर्थः।

(७८) बह्विति।—बहवः—अनेके मृतानां—शवानाम्, एकत्र—युद्धे हतानां प्रतिपक्षवीराणाम् अन्यत्र—कारणान्तरेण गतजीवानां जनसामान्यानामिति भावः पटाः—वस्त्राणि अवगुण्ठनानि—मलकाच्छादनानि शिरोवेष्टनानि च यस्याः तां रञ्जितरङ्गा—रञ्जितः—शोणितीकृतः रङ्गः—रणभूमिः यया ताम्, ("कामपेऽपि च रङ्गो ना राग नृत्य रणाजितौ" इति मेदिनी), अन्यत्र—रञ्जितः—अनुरक्तीकृतः रङ्गः—नृत्यसमाजः यया तथोक्ता जनङ्गमानां—चाण्डालानां ["गमश्च (३।२।४७ पा०) इति खच् "अरुर्द्विषत्—" (६।३।६७ पा०) इत्यादिना मुम्। "चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः" इत्यमरः] वध्यवाह्यामिव—वधानुक्रमेण वहनीयामिवेत्युत्प्रेक्षा आतगर्हणीयामित्यर्थः कौलीन्यवाहुल्याच्च यद्वा—वधेन—वधदण्डेन वाह्या—शोध्या वधार्हस्मितद्व्यवहारनीचितामित्यर्थः अनार्याम्—अप्रार्थ्यां नीचप्रकृतिमित्यर्थः एकत्र बहुनरपतिभोग्यत्वात्, अन्यत्र—नीचाश्रयत्वात् श्रियं—सम्पदं राजलक्ष्मीमित्यर्थः शोभाञ्च।

(७९) दग्धगृहे भस्मीभूतावासे तिरस्कारपरित्यक्तत्वात् विगतश्रीके इति भावः शकुनिरिव—गृहपालितपक्षीव गृहचटकेव इत्यर्थः ["शकुनिरिव" इत्यत्र "शकुन्तरिव" इति पाठोऽपि स एवार्थः "गृहसारिका" इति केचित्]।

(८०) वाससि इव—वसने इव सुलग्नं—ससक्तम् इदं स्नेहमलं स्नेहः—संसारेषु अनुरागः मलमिव—पुरीषमिव स्वदयप्रमादसञ्चयमिव वा अन्यत्र—स्नेहः—तैलादि वस्त्रलग्नस्नेहमिति भावः मलं—मालिन्यम्, अमलैः निर्मलैः शिखरीति।—शिखरिणः—पर्वतस्य शिखरेषु—शृङ्गेषु यानि प्रस्रवणानि—निर्झराः तेषां स्वच्छानि—विशदानि स्रोतांसि—प्रवाहाः तेषाम् अम्बूनि—जलानि तैः, क्षालयितुं—शोधयितुम्, आश्रमपदे—तपोवने, यथा निर्मलपयोभिः

(८१) अतस्त्वम् अन्तरितयौवनसुखाम् अनभिमतामपि जरामिव पुरुः आज्ञया गुरोर्गृहाण मे राज्यचिन्ताम् । (८२) त्यक्तसकलबालक्रीडेन हरिणा इव दीयताम् उरो लक्ष्म्यै । परित्यक्तं मया शस्त्रम्" इत्येवमभिधाय खड्गग्राहिणो हस्तात् आदाय निज निस्त्रिंशम् उत्ससर्ज धरण्याम् ।

---

मलीमसं वासः शुध्यति, तथा निष्कामाराधनमेव मे अन्तर्मलशोधकं भवि-ष्यतीत्याशयः ।

(८१) अत,—आश्रमगमनाभिलाषात् ["अत" इत्यत्र "यत" इति पाठे,—यस्मा इच्छाया, यस्मादभिलाषादित्यर्थः]। अन्तरितेति ।—अन्तरित—व्यवहितं, दूरीकृतमित्यर्थः, यौवनसुख—तारुण्योचितविषयोपभोगानन्द यस्या तथाविधा, वर्जितयौवनोचितविषयसम्भोगसुखामित्यर्थः, एकत्र,—प्रजानां हितचिन्तायां राज्य-रक्षणचिन्तायाञ्च सदा अवधानतोचित्यात्, अन्यत्र – क्षीयमाणधातुकतया उपभोग-सामर्थ्याभावादिति भाव अत एव अनभिमताम—अनभिलषिताम, अप्रिया-मित्यर्थ, जरामिव—वलिपलितादिना कायशैथिल्यापादकदशाविशेषमिव वार्द्धक्य-मिवेति यावत, पुरु,—ययातिनृपते कनीयान् सुत, स इव, गुरो,—ज्येष्ठस्य भ्रातु, पितुश्च । राज्यचिन्ता—राज्यभारम् । पुरा ययाति शुक्राचार्यसुतां देव-यानीम् अवमत्य, तस्या दासीभूतां वृषपर्वणोऽसुरराजस्य कन्यां शर्मिष्ठां निर्भरं कामयमानो दुहितृनिवेदितेन शुक्रेण, "जरां प्राप्स्यसि" इति शप्त विषयभोगतृष्णया ज्येष्ठान् सुतान् यदुप्रभृतीन् 'मदीया जरा गृह्णीत' इत्यादिशन् ते अवमत कनीयसे पुत्राय पुरवे जरा दत्तवान्, स तु पुरु पितुराज्ञया तां जरां प्रतिपेदे इति भारती वार्त्ता ।

(८२) त्यक्तेति ।—त्यक्ता—उत्सृष्टा सकला—समग्रा, बालक्रीडा—शैशवो-चितकेलि येन तथाभूतेन बालभाव परित्यजता इत्यर्थः । हरिणेव—विष्णुनेव, हरिरपि द्वापरे कृष्णजन्मनि कंसवधानन्तरं तद्राज्ये उग्रसेनं संस्थाप्य शासनसौकर्याय तत्रैव स्थित्वा सर्वां वृन्दावनलीलां बालोचितां परिजहार, तत्र,प्रभृति रुक्मिणीं च उरसि अस्थापयत्, लक्ष्म्यै—राजश्रियै, कमलायै च, उर,—वक्षःस्थल, दीयतां—समर्प्यताम् । निस्त्रिंशम्—असि, ["संख्याया तत्पुरुषस्य वाच्य" वा०) इति निर्गत त्रिंशतोऽङ्गुलिभ्य इति विग्रहे डच् प्रत्यय । "खड्गे तु निस्त्रिंशचन्द्र-हासासिरिष्टय" इत्यमर ] उत्ससर्ज—परित्याज ।

अथ तच्छ्रुत्वा (८३) निशितशिखेन शूलेन इव आहतः प्रविदीर्णहृदयो देवो हर्षः समचिन्तयत्,—"किं नु खलु माम् अन्तरेण आर्य्यः केनचित् असहिष्णुना किञ्चिद्ग्राहितः कुपितः स्यात्? उत अनया दिशा परीक्षितुकामो माम्? उत (८४) शोकजन्मा चेतसः समाक्षेपोऽयमस्य? आहोस्वित् आर्य्य एव अय न भवति? किं वा आर्य्येण अन्यदेवाभिहितम् अन्यदेव अश्रावि मया (८५) शोकशून्येन श्रवणेन्द्रियेण? आर्य्यस्य वा अन्यदेव विवक्षितम् अन्यदेव आपतितं मुखेन? अथवा सकलवंशविनाशाय विनिपातनोपायोऽयं विधेः? मम वा (८६) निखिलपुण्यपरिचयोपक्षेपः? कर्म्मणाम्

---

(८३) निशितशिखेन—तीक्ष्णाग्रेण। माम् अन्तरेण—विना, मयि असन्निहिते इत्यर्थः। असहिष्णुना—आवयोः सौभ्रात्रं सोढुमशक्नुवता इत्यर्थः। ग्राहितः,—अवबोधितः, किञ्चित् मद्दुश्चेष्टितमिति भावः। उत—अथवा, अनया दिशा—अनेन इत्यर्थः, परीक्षितुकामः,—परीक्षार्थी आत्मानं प्रति मदीयाभिप्रायज्ञानेच्छुरित्यर्थः।

(८४) शोकजन्मा—मन्युप्रभवः। समाक्षेपः,—समाकर्षणं, समाकुलता वा, विकृतिरिति यावत्। आहोस्वित्—अथवा।

(८५) शोकशून्येन—शोकेन-शुचा, शून्येन—स्वव्यापारहीनेनित्यर्थः, विमनस्कतया सम्यगर्थग्रहणसामर्थ्यविरहितमिति भावः तेन। विवक्षितम्—वक्तुम् इष्टम्। आपतितम्—उपस्थितं निर्गतं वा। सकलेति।—सकलस्य—कृत्स्नस्य, वंशस्य—कुलस्य, अस्माकमिति भावः, विनाशाय—ध्वंसाय, अस्मान् निर्वंशीकर्त्तुम् इत्यर्थः, आर्य्ये वनं गते अहमप्यवश्यमेव तमनुगमिष्यामि, मय्यपि गते वंशोऽयं कर्णधारविहीना नौरिव विपर्य्यासं प्राप्स्यति, ततः च अस्य लोपः अवश्यम्भावी इति भावः। विनिपातनोपायः,—ध्वंसप्रयत्नः, ["विनिपातनोपायः" इत्यत्र "निपातनोपायः" इति पाठोऽपि क्व चिदस्ति] विधेः,—नियतेः, प्रतिकूलस्य दैवस्य इति भावः परमेष्ठिनो वा, विधातुर्वा इत्यर्थः, ("विधिर्ना नियतौ काले विधाने परमेष्ठिनि" इति मेदिनी)।

(८६) निखिलेति।—निखिलानां—समग्राणां पुण्यानां—श्रेयसां, परिचयः,—प्रभावः, तस्य उपक्षेपः,—प्रसङ्गः।

(८७) अननुकूलसमग्रग्रहचक्रवालविलसितं वा ? अथवा (८८) तातविनाशनिःशङ्ककलिकालक्रीडितम् ? येन अयं यः कश्चित् इव यत्किञ्चनकारिणं माम् अपुष्पभूतिवंशसम्भूतमिव, अताततनयमिव, (८९) अनात्मानुजमिव, अभक्तमिव, दृष्टदोषमिव,

---

(८७) अननुकूलेति ।—अननुकूलानां,—प्रतिकूलानां, समग्राणां,—सर्वेषां, ग्रहाणां,—रव्यादीनाम् इति यावत्, तेषां चक्रवालस्य—समूहस्य, विलसितं—विजृम्भितं, विचेष्टितमिति यावत् अननुकूले ग्रहमण्डले कथमेवं घटेत ? इत्याशयः ।

(८८) तातेति ।—तातस्य—पितुः, विनाशेन—उपरमेण, निःशङ्कः,—निर्भयः यः कलिकालः—चतुर्थयुगः तस्य क्रीडितं—विलसितं, जीवति ताते अस्मल्लोकानां शासितरि तच्छासनात् कलियुगं जनानां धर्मविगर्हितकर्मणि प्रवर्त्तनरूपं स्वप्रभावं विस्तारयितुं न प्राभवत्, इदानीं तदुपरमात् निर्भयस्य निःशङ्ककलिकालस्य स्वप्रभावविस्तारफलमिदं भवेत् ? इति भावः, येन—कलिक्रीडितेन इत्यर्थः, कलिप्रभावेण इति यावत् अयम्—आर्यः यः कश्चिदिव—साधारणजन इव, यत्किञ्चनकारिणं—यथेच्छकारिणम् उल्लङ्घितगुरुजनशासनमित्यर्थः, यः गुरुजनादेशमतिक्रम्य यथेष्टमाचरति स एव ईदृशकठोरवाक्यताडनं प्राप्तुमर्हति, न मद्विधः गुरुजनानुरक्त इति भावः, यद्वा—यत्किञ्चनकारिणम्—अकिञ्चनम्, अल्पबुद्धिसामर्थ्योदकमिति यावत्, बाल्यसुलभक्रीडनाद्यनुरक्तम्, अत एव राज्यशासनादिदुरूहव्यापारानभिज्ञत्वात् अयोग्यमिति भावः । अपुष्पभूतिवंशसम्भूतमिव—पुष्पभूतिः,—तन्नामा आदिराजः, तस्य वंशे—अन्वाये असम्भूतमिव—अनुत्पन्नमिव यः तादृशस्य सुनयस्य पुष्पभूतेः वंशे समुत्पन्नः स कथमीदृशमनयमाचरितुं शक्नुयादिति भावः । अताततनयमिव—अतातस्य—तातभिन्नस्य अन्यस्य तनयमिव—पुत्रमिव, [“धलिमलितानिष्य कथम्” (उ० ६ पा० ८८ पृ०) इति तेन कथनं] प्रख्यात धार्मिकस्य पितुः पुत्रो भूत्वा ईदृशे धर्मविगर्हिते कर्मणि प्रवृत्तिः मे कदाऽपि न सम्भवेदिति भावः ।

(८९) अनात्मानुजमिव—अनात्मनः,—आत्मभिन्नस्य, अनुजमिव—कनिष्ठभ्रातरमिव एव निःस्पृहस्य अस्य भ्रातुर्मे ईदृशी दुराकाङ्क्षा असम्भवा एवेति भावः । अभक्तमिव—अननुरक्तमिव, अननुरक्ते एवंविधम् अप्रियमवश्यं वक्तुं युज्यते, न सर्वथाऽनुरक्ते मयि इति भावः । दृष्टदोषमिव—कृतापराधमिवेत्यर्थः, अपराधिनः भ्रातुः एवं मिथ्यात्यागः कदाचित् युज्यते, न निर्दोषस्य ममेति भावः ।

(९०) श्रोत्रियमिव सुरापाने, सद्भृत्यमिव स्वामिद्रोहे, सज्जनमिव नीचोपसर्पणे, सुकलत्रमिव व्यभिचारे, अतिदुष्करे कर्म्मणि समादिष्टवान्? (९१) तदेतत् तावत् अनुरूपं यत्, शौर्य्योन्माद मदिरोन्मत्त समस्त सामन्त मण्डल समुद्र मथन मन्दरे ताहग्वि पितरि मृते तपोवनं वा गम्यते? वल्कलानि वा गृह्यन्ते? तपांसि वा सेव्यन्ते? या तु मयि (९२) राज्याज्ञा, सा दग्धे·

---

(९०) सुरापाने—मद्यपाने, श्रोत्रियमिव—छान्दसमिव, वेदपारगमित्यर्थः, ("श्रोत्रियच्छान्दसौ समौ" इत्यमरः) केनचित् सुरां पातुमादिष्टेन श्रोत्रियेण यथा तत् कर्म्म अतिदुष्करं भवति, तथेति भावः। स्वामिद्रोहे—प्रभोरनिष्टाचरणे, सद्भृत्यमिव—उत्तमकिङ्करमिव, प्रभोरनिष्टाचरणे केनचित् नियुक्तेन प्रभुभक्तदासेन यथा तत् कर्म्म न सुकरं भवति, तथेति भावः। नीचोपसर्पणे—हीनानुगमने, प्राकृतजनसेवायामित्यर्थः, सज्जनमिव—साधुजनमिव, केनचित् बलात् नीचसेवायां प्रवर्त्तितेन उत्तमप्रकृतिकेन यथा तत् कर्म्म न सुकरं भवति तथेति भावः। व्यभिचारे—परपुरुषप्रसक्तौ, सुकलत्रमिव—सतीं स्त्रियम् इव केनचित् बलात् व्यभिचारे नियोजितया पतिव्रतया यथा तत् कर्म्म जीवनसंशयेऽप्यनादरणीयं भवति, तथेति भावः। अतिदुष्करे—अतिदुर्वहे, दुःखेनापि कर्त्तुमशक्ये इत्यर्थः, ज्येष्ठकनीयोल्लङ्घनरूपे इति भावः, कर्म्मणि—राजपदग्रहणरूपकार्य्ये, कनिष्ठानर्हराज्यचिन्तायामिति भावः। इह सन्दर्भे शङ्कासूयाधैर्य्यवितर्कदैन्यविमोहादीनां प्रबलता विप्रज्ञायजविषयकरतिभावस्याङ्गम् इति भावशबलोऽलङ्कारः।

(९१) एतत्—वक्ष्यमाणतपोवनगमनादिरूपं कर्म्म इत्यर्थः, अनुरूपं—युक्तम्। शौर्य्येति।—शौर्य्योन्मादेन—पराक्रमजनितौद्धत्येन, मदिरोन्मत्ता इव—सुरापानमत्ता इव ये समस्ताः,—सर्व्वे, सामन्ताः,—अधीश्वराः, तेषां मण्डलं—चक्रवालम् एव, समुद्रः,—सागरः, तस्य मथने—विलोडने, मन्दरः,—मन्दराख्यो गिरिः तस्मिन् ताहग्वि—प्रख्याते वीरे, समुद्धतराजन्यगणविजेतरि इत्यर्थः, अडाश्रयान्तर्हितसाररत्नसमुच्चयानामुद्धर्त्तरि इत्यर्थः एतेन उन्मत्तोन्मादभञ्जनपुरःसररत्नाविष्कारः, विजिगीषो परलोकस्य भूपालस्य लोकोपकारार्थकः, न तु हिंसार्थक इति व्यज्यते। सेव्यन्ते—चर्य्यन्ते।

(९२) राज्याज्ञा —राजकार्य्यादेशः। दग्धे—सन्तप्ते, पितृशोकेन भ्रातृमृत्यु·

ऽपि दाहकारिणो मयि अवग्रहग्लपिते धन्वनि इव अङ्गारवृष्टिः। तत् असदृशम् इदम् आर्यस्य। यद्यपि च (९३) विभुः अनभिमानः, द्विजातिः अनेषणः, मुनिः अरोषणः, कपिः अचपलः, (९४) पण्डितः अमत्सरः, वणिक् अतस्करः, रम्यजानिः अकुहनः, साधुः अदरिद्रः, (९५) द्रविणवान् अखलः, कीनाशोऽनभिगतः, मृगयुः अहिंस्रः, (९६) पाराशरी

---

कारिणेन च इति भावः। अवग्रहग्लपिते—अवग्रहः,—प्रतिबन्धः, निर्भरणकपविघ्न इत्यर्थः, वृष्टिरोधश्च, ("अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके" इति मेदिनी) तेन ग्लपिते—ग्लानिं नीते, अवसन्ने विशुष्के च इति भावः। धन्वनि इव—मरौ इव, ("समानौ मरुधन्वानौ" इत्यमरः) अङ्गारवृष्टिः,—अग्निस्फुलिङ्गवर्षणम्। असदृशम्—अयुक्तम्, अनुचितमित्यर्थः, दग्धदाहनमर्यीजनमित्याशयः।

(९३) विभुः—प्रभुः अनभिमानः,—निरहङ्कारः। द्विजातिः—ब्राह्मणः, अनेषणः,—वित्तमलाभ अयाचक इत्यर्थः, अधिगतार्थतिरस्कर्त्ता इत्यर्थो वा। मुनिः—तापसः अरोषणः—अक्रोधनः। कपिः,—वानरः, अचपलः,—अचञ्चलः, धीर इत्यर्थः।

(९४) पण्डितः,—विद्वान्, ["पण्डितः" इत्यत्र "कविः" इति पाठोऽपि स्वचाप्यः] अमत्सरः,—अन्यशुभद्वेषरहितः। वणिक्—व्यवसायी, अतस्करः,—अचौरः। रम्यजानिः—रम्या—मनोहारिणी सुन्दरीत्यर्थः, जाया—भार्या यस्य तथोक्तः सुन्दरभार्य इत्यर्थः, ["रम्यजानिः" इत्यत्र 'प्रियजानिः' इति पाठः—प्रिया—प्रियदर्शना सुन्दरीत्यर्थः] अकुहनः—नास्ति—कुहना—ईर्ष्या शङ्का वा यस्य तथाभूतः, ('कुहना दम्भचर्य्यायामीर्ष्यालौ' इति मेदिनी) परपुरुषभयवर्जित इत्यर्थः स्त्रियाः पुरुषान्तरासक्तिशङ्कायाश्च "भार्य्या रूपवती शत्रुः" इत्यादिप्रमाण्यात् इति भावः। साधुः,—सुजनः, खलतावर्जित इत्यर्थः, अदरिद्रः,—धनी।

(९५) द्रविणवान्—धनी, अखलः,—अदुर्जनः, सुजन इत्यर्थः। कीनाशः—क्षुद्रः नीचाशय इत्यर्थः कृतान्तो वा, ("कृतान्ते पुंसि कीनाशः क्षुद्रकार्षिकयोस्त्रिषु" इत्यमरः) अनभिगतः,—अद्वेष्यः, प्रिय इति यावत् ("द्वेष्ये त्वभिगतः" इत्यमरः) मृगयुः,—व्याधः, [मृगं यातीत्यर्थे "मृगय्वादयश्च" (उ० १ पा० ३८ सू०) इति कुप्रत्ययो निपातनम्] अहिंस्रः,—हिंसावर्जित इत्यर्थः।

(९६) पाराशरी—भिक्षुः, ("भिक्षुः परिव्राट् कर्मन्दी पाराशर्य्यपि मस्करी"

ब्राह्मणः, सेवकः सुखी, कितवः कृतज्ञः, (९७) परिव्राट् बुभुक्षुः, नृशंसः प्रियवाक्, अमात्यः सत्यवादी, (९८) राजसूनुः अदुर्विनीतश्च जगति दुर्लभः, तथाऽपि मम आर्य्य एव आचार्य्यः। को हि नाम (९९) तद्विधे निपतति राजगन्धकुञ्जरे जनयितरि, (१००) ईदृशे च विफलीकृतविशालशिलास्तम्भोरुभुजे भूभुजि भ्रातरि त्यक्तराज्ये ज्यायसि नववयसि तपोवनं गच्छति, (१०१) सकललोकलोचनजलपातप्लाविते

---

इत्यमरः ) ब्राह्मण,—ब्राह्मणोचितानुष्ठानरत। सेवक,—भृत्य। कितव,—धूर्त्त, द्यूतकृदित्यर्थ, ("धूर्त्तोऽक्षदेवी कितवोऽक्षधूर्त्तो द्यूतकृत् समाः" इत्यमरः ) कृतज्ञ,—कृतोपकारवित्।

(९७) परिव्राट्—यति बुभुक्षु,—भोजनार्थी, प्राय इश्वरे ब्रह्मसमाधिमग्नाना भोजनाभिलाष कादाचित्क आश्रितसेवकानुरोधेन, न तु स्वेच्छयेत्याशय। ["परिव्राट् बुभुक्षु" इत्यत्र "परिव्राडबुभुक्षु" इति पाठे,—परितो व्रजति गच्छतीति परिव्राट्—पर्य्यटक, दूराध्वविहरणशील इत्यर्थ, अबुभुक्षु,—अभोजनेच्छु, अक्षुधित इत्यर्थ ]। नृशंस,—निष्ठुर, प्रियवाक—मधुरभाषी। अमात्य—सचिव, राजकार्य्यकारीति यावत, सत्यवादी—सत्यभाषणशील, शासनतन्त्रे सत्त्वव सत्यशीलत्वेन न कार्य्यसिद्धि इत्याशय।

(९८) राजसूनु—राजतनय अदुर्विनीत,—सुशील इत्यर्थ, राजपु० मा दुर्विनीत सदा यद्येतदुक्तवान ममार्य्य इति भाव। आचार्य्य,—गुरु, उपदेष्टा इत्यर्थ, आर्य्य यथा नाम अशिक्षयत्, तथैव मया शिक्षितमिति भाव।

(९९) तद्विधे—तादृशे निरुपमप्रतापशालिनि इति भाव, राजेति।—राजा एव गन्धकुञ्जर,—गन्धद्विप तस्मिन्, जनयितरि—पितरि।

(१००) ईदृशे—एवम्भूते, विफलीकृतेति।—विफलीकृतौ—व्यर्थीकृतौ इति यावत, विशालौ,—विपुलौ, महाभारौ इत्यर्थ, शिलास्तम्भौ—प्रस्तरस्तम्भौ याभ्या तादृशौ, उरु—महान्तौ, भुजौ—बाहू यस्य तथाभूते, भूभुजि—भूपतौ। ज्यायसि—अग्रजे। नववयसि—यौवने।

(१०१) सकलेति।—सकलाना—सर्वेषा, लोकाना—जनाना, लोचनजलस्य—बाष्पवारिण, पातेन—वर्षणेनेत्यर्थ, आप्लाविते—समन्तात् व्याप्ते, पङ्किले इति

(१०७) निवासं गिरिगुहां कः पाति पृष्ठतः? प्रताप-सहाया हि सत्त्ववन्तः। (१०८) कः चपलां लक्ष्मीं प्रति अनुरोधोऽयम् आर्य्यस्य,—यत् इयमपि चीरान्तरितकुचा कुशकुसुमसमित्पलाशपुलिकां वहन्ती तत्रैव तपोवने वनमृगी इव न नीयते जराजालिनी? किं वा मम अनेन वृथा बहुधा

(१०७) निवासं—वासभूमिम्। पृष्ठतः—पश्चात् स्थितामिति भावः, पाति?—रक्षति? स्वप्रतापपराजितपराक्रान्तप्रतिपक्षनृपतिचक्रे आर्य्ये तपोवनं गते तन्निवासभूतामिमां राजधानीं को रक्षति? इति ध्वनिः। पदार्थहेतुककाव्यलिङ्गालङ्कृतिः व्यङ्ग्या इति चमत्कारातिशयः। सत्त्ववन्तः,—महानुभावाः, प्रतापसहायाः,—प्रतापः,—कोषदण्डजतेजः एव सहायः,—अनुकूलः येषां तथोक्ताः, सत्त्ववन्तो हि किञ्चिदकृत्वाऽपि स्वप्रभावेणैव सर्वान् वशमानेतुं प्रभवन्ति इत्यर्थः। एतेन किमप्यकुर्व्वत्यपि त्वयि इह अत्र स्थिते एव राज्यं सुरक्षितं स्यादिति, अन्यथा एतस्य रक्षणं दुष्करमिति व्यज्यते।

(१०८) चपलाम्—अस्थिराम्, लक्ष्मीम्—राजश्रियम्, प्रति आर्य्यस्य—भवदीयस्येत्यर्थः, अयम्—एषः, अनुरोधः,—उपरोधः आग्रह इत्यर्थः, कः?—कीदृशः? यत्—यदि, इयम्—लक्ष्मीः, चीरान्तरितकुचा—चीरम्—वल्कलं जीर्णवसनखण्डं वा, तेन अन्तरितौ—आवृतौ, कुचौ—स्तनौ यस्याः तथाभूता, [ "यत् इयमपि चीरान्तरित-कुचा" इत्यत्र "यदि इयमपि न चीरान्तरितकुचा" इति पाठान्तरम् ] कुशेति।—कुशाः,—दर्भाः, कुसुमानि—पुष्पाणि, समिधः,—काष्ठानि, पलाशाः,—पत्राणि, तेषां पुलिका—समूहः ताम्, तापसीसुलभामिति भावः, भवानपि यद्वत् एतत् सर्वं वहति, वहन्ती—दधाना, तत्रैव तपोवने—आर्य्याधिष्ठिताश्रमे, न नीयते—न प्राप्यते, स्वयमेव न गम्यते इत्यर्थः, यदीयं लक्ष्मीर्नानुसरति इति भावः, यद्वा,—न नीयते—नेतुं न शक्यते, आर्य्येणेति शेषः, [ "न नीयते" इत्यत्र "नीयते" इति पाठान्तरम् ] जराजालिनी—जरायाः जालम्—केशपक्कतादिकम् अस्याः अस्ति इति तथाभूता, अतिस्थविरा इत्यर्थः, पुरुषपरम्परया आगतत्वेन सनातनी इति भावः, यथा दुर्वहा चिरन्तनी इयं लक्ष्मीः तपोवने यदि न आर्य्यमनुसरति, तस्मात्तु तथा प्रकृतेः अभावात् तदा तस्याः पालने कोऽयम् आग्रहः सम्भवेत्? इत्याशयः। यदि वा आर्य्यं नापेक्षते, तदा आर्य्यस्यापि तदपेक्षा निष्प्रयोजना इति निष्कर्षः।

(१०९) विकल्पितेन? तूष्णीमेव आर्य्यम् अनुगमिष्यामि। गुरुवचनातिक्रमकृतञ्च किल्बिषम् एतत् तपोवने तप एव अपास्यति" इति अवधार्य्य मनसा प्रथमतरं गतस्तपोवनम् अधोमुखः तूष्णीम् अवातिष्ठत।

(११०) अत्रान्तरे पूर्व्वादिष्टेन एव रुदता वस्त्र-कर्मान्तिकेन समुपस्थापितेषु वल्कलेषु, (१११) निर्द्दय-करतलताड़नभिया इव क्वापि गतहृदये रटति राजस्त्रैणे, (११२) तारम् अब्रह्मण्यम् ऊर्द्धदोष्णि विरुदति विप्रजने,

---

(१०९) विकल्पितेन—पर्य्यालोचितेन, अनुशोचनेन इति यावत्। तूष्णीमेव—मौनमास्थाय एव इत्यर्थः, किमप्युत्तरमदत्त्वैवेति यावत्। गुर्व्विति।—गुरोः,—वरिष्ठस्य, वचनातिक्रमेण—वाक्यलङ्घनेन, राज्यग्रहणरूपादेशाकरणेनेत्यर्थः, कृत—जनितं, किल्बिषं—पापं, ("पापं किल्बिषकल्मषम्" इत्यमरः) तपः,—चान्द्रा-यणादिकं व्रतं, ("… …तपो लोकान्तरेऽपि च। चान्द्रायणादौ धर्मे च पुमान् शिशिर-माघयोः ॥" इति मेदिनी) अपास्यति—खण्डयिष्यति, अपनेष्यति इत्यर्थः। अवधार्य्य—निश्चित्य। प्रथमतरं—ज्येष्ठस्य गमनात् अतिपूर्व्वमित्यर्थः। अवातिष्ठत—अवर्त्तत।

(११०) "अत्रान्तरे" इत्यस्य "संवादको नाम·सदसि आत्मानमपातयत्" इत्यग्रेणान्वयः। पूर्व्वादिष्टेन—पूर्व्वमाज्ञप्तेन, वस्त्रकर्मान्तिकेन—परिच्छदाधिकारिणा, समुपस्थापितेषु—समीपमानीतेषु, वल्कलेषु—तरुत्वक्षु तापसोचितपरिधेयेषु इति यावत्।

(१११) निर्द्दयेति।—निर्द्दयं—निष्करुणम्, उत्कटमित्यर्थः, तत् यथा तथा, करतलेन—पाणितलेन, यत् ताडनम्—आघातः, तस्मात् भीः,—भयं तया इव। गत-हृदये—गतं—चलितं, हृदयं—चेतः यस्य तथाभूते, शून्यमनसि इत्यर्थः, अचेतनप्राये इति भावः, ["गतहृदये" इत्यत्र "गते हृदये" इति पाठान्तरम्] रटति—नदति, सशब्दं रुदतीत्यर्थः राजस्त्रैणे—राजान्तःपुरिकाजने।

(११२) तारम्—उच्चैः यथा तथा, ऊर्द्धदोष्णि—उत्क्षिप्तबाहौ। अब्रह्मण्यम्—अवध्योक्तिविशेषः तत् ("अब्रह्मण्यम् अवध्योक्तौ" इत्यमरः। समुदीर्य्येत्यध्याहृत-क्रियायाः कर्म्मपदं द्वितीयान्तम्) मा अस्मान् परित्यागेन जहीत्येवरूपं वचनपूर्व्वक-मित्यर्थः, विरुदति—विशेषेण क्रन्दति।

(११३) पादप्रणतिपरे फूत्कुर्व्वति पौरवृन्दे, विद्राति विद्रुतचेतसि चिरन्तने परिजने, परिजनावलम्बिते वेपमानवपुषि पर्य्याकुलवाससि शोकगद्गदवचसि गलितनयनपयसि निवारणोद्यतमनसि वर्षीयसि विशति बन्धुवर्गे, (११४) निराशेषु नखलिखितमणिकुट्टिमेषु अवाङ्मुखेषु निश्वसत्सु सामन्तेषु, सबालवृद्धासु तपोवनाय प्रस्थितासु सर्व्वासु प्रजासु, सहसा एव प्रविश्य (११५) शोकविक्लवः प्रचरितनयनसलिलो राज्यश्रियः परिचारकः संवादको नाम प्रज्ञाततमो विमुक्ताक्रन्दः सदसि आत्मानम् अपातयत्।

---

(११३) पादप्रणतिपरे—चरणपतनपरायणे, पौरवृन्दे—पुरवासिवर्गे, फूत्कुर्व्वति—चीत्कारं कुर्वति इत्यर्थः मुक्तकण्ठं रुदतीति यावत्। चिरन्तने—पुरातने, वंशपरम्परागते इत्यर्थः, ["सायंचिर—" (४।३।२३ पा०) इत्यादिना ट्युः तुडागमश्च] परिजने—परिचारकवर्गे विद्रुतचेतसि—विचलितमनसि विद्राति—धावति, परिजनावलम्बिते—परिवारगृहीतहस्ते इत्यर्थः, वार्द्धक्यात् स्वयमागन्तुमसामर्थ्यादिति भावः, वेपमानवपुषि—कम्पमानदेहे, पर्य्याकुलवाससि—विस्रस्तवसने, निवारणसंवादश्रवणेन ससम्भ्रमागमनादिति भावः, शोकेति।—शोकेन—मन्युना, गद्गदम्—अस्पष्टनिर्घोषं बाष्पावरुद्धकण्ठत्वादिति भावः, वचः—वचनं यस्य तथाभूते, गलितनयनपयसि—क्षरितनेत्रवारौ, निवारणेति।—निवारणाय—प्रतिषेधाय, तपोवनगमनादस्य इति भावः, उद्यतं—प्रवृत्तं, ऊर्ध्वमानयदे, मनः—चित्तं यस्य तथाभूते, वर्षीयसि—अतिस्थविरे, ["वृद्धशब्दात्" "द्विवचन—" (५।३।५७ पा०) इत्यादिना ईयसुनि "प्रियस्थिर—" (६।४।१५७ पा०) इत्यादिना वृद्धस्य वर्षादेशः] बन्धुवर्गे—ज्ञातिसमूहे।

(११४) नखेति।—नखैः,—कररुहैः, लिखितानि—अङ्कितानि, कृतरेखाणीत्यर्थः, मणिकुट्टिमानि—रत्नखचितगृहाभ्यन्तरतलानि यैः तथोक्तेषु, अवाङ्मुखेषु—अधोमुखेषु, निश्वसत्सु—निश्वासं त्यजत्सु आयतमिति शेषः, सामन्तेषु—अधीनमित्रराजेषु, निराशेषु—हताशेषु। प्रस्थितासु—प्रस्थातुमुद्यतासु इत्यर्थः।

(११५) शोकविक्लवः,—मन्युविह्वलः, प्रचरितेति।—प्रचरितं—प्रकर्षेण स्रुतं, नयनसलिलं—नेत्रजलं यस्य तादृशः। राज्यश्रियः,—तदाख्यायाः राज्यवर्द्धन-

अथ ( ११६ ) सम्भ्रान्तो भ्राता सह स्वयं देवो राज्यवर्द्धनः तं पर्य्यपृच्छत्,—"भद्र! भण भण, किम् अस्मद्व्यसनव्यवसाय-वर्द्धनबद्धधृतिः ( ११७ ) अवनिपतिमरणमुदितमतिः अधृति-करम् अपरम् अधिकतरम् इतः समुपनयति विधिः?" इति। स कथञ्चिदपि अकथयत्,—"देव! पिशाचानामिव ( ११८ ) नीचा-त्मना चरितानि छिद्रप्रहारीणि प्रायशो भवन्ति, यतो यस्मिन् अहनि अवनिपतिः उपरत इति अभूत् वार्त्ता, तस्मिन्नेव देवो ग्रहवर्म्मा दुरात्मना मालवराजेन जीवलोकम् आत्मनः सुकृतेन

भगिन्या। प्रज्ञाततम,—अतिपरिचित इत्यर्थ, इतः पूर्वं प्रभाकरवर्द्धनस्यैव परिचारकत्वादिति भाव। विमुक्ताक्रन्द,—उच्चै रुदन्नित्यर्थ। सदसि—सभायाम्।

( ११६ ) सम्भ्रान्त —सभयोद्विग्न। पर्य्यपृच्छत्—अन्वयुङ्क्त। अस्मदिति।—अस्माकं व्यसनानि—विपद एव व्यवसाया,—वाणिज्यानि, तेषां वर्द्धने—अभ्युन्नति-करणे, बद्धा—निश्चला, धृति,—धैर्य्यं सन्तोष वा येन तथाभूत, अस्मद्विपदर्द्धनैकपर इत्यर्थ।

( ११७ ) अवनीति।—अवनिपते,—राज्ञ प्रभाकरवर्द्धनस्य, मरणेन—मृत्युना, मुदिता—प्रहृष्टा मति —बुद्धि यस्य तथाविध तत्सद्भावे स्वप्रभावं प्रकटयितु मक्षम इति भाव, विधि,—दैवम् इत —अस्मात्, पितुः व्यसनादिति भाव, अधृतिकरम्—असन्तोषकरम् अधैर्य्यकर वा समुपनयति?—समुपस्थापयति? इह प्रतिपक्षगतबलवत्त्वात्स्वगतदुर्बलत्वयो समुन्मेषात् प्रत्यनीकालङ्कार ।

( ११८ ) नीचात्मना—क्षुद्रचेतसा, दुरात्मनामित्यर्थ, चरितानि—स्वभावा, छिद्रप्रहारीणि—छिद्रेषु—रन्ध्रेषु, प्रमादेषु इति भाव, प्रहरन्ति—आघातयन्तीति तथाविधानि, अन्यदा प्रहारसाहसाभावात इत्याकूतम्। अवनिपति,—राजा, प्रभाकरवर्द्धन इत्यर्थ, उपरत,—मृत। वार्त्ता—जनश्रुति, ("वार्त्ता वृत्तौ जनश्रुतौ" इत्यमर)। ग्रहवर्म्मा—प्रभाकरवर्द्धनस्य जामाता। जीवलोक—प्राणिपूर्णं जगत इहलोकमित्यर्थ। आत्मन,—स्वस्य, मालवराजस्येति यावत, सुकृतेन—पुण्येन, येन सुकृतेन स एतावन्तं कालं जीवितोऽस्ति, ग्रहवर्म्मविनाशनेन तस्य

सह त्याजितः। (११९) भर्त्तृदारिकाऽपि राज्यश्रीः कालायसनिगडयुगलचुम्बितचरणा चौराङ्गना इव संयता कान्यकुब्जे कारायां निक्षिप्ता। किंवदन्ती च, यथा किल अनायकं साधनं मत्वा जिघृक्षुः सुदुर्मतिः एतामपि भुवम् आजिगमिषति, इति विज्ञापिते प्रभुः प्रभवति" इति।

ततश्च तादृशम् (१२०) अनुपेक्षणीयम् असम्भावितम् आकस्मिकम् अपरं व्यतिकरम् आकर्ण्य, अश्रुतपूर्व्वत्वात् परिभवस्य, परपरिभवासहिष्णुतया च स्वभावस्य, दर्पबहुलतया

तत सुन्नतमपि क्षयं गत, चौरपुरुषस्य तस्य अचिरेणैव भवद्भिर्विनङ्क्ष्यमाणत्वादिति] भाव। त्याजित,—हापित, परलोक प्रापित इत्यर्थ।

(११९) भर्त्तृदारिका—राजसुता, ("राजा भट्टारको देवस्तत्सुता भर्त्तृदारिका" इत्यमर)। कालेति।—कालायसनिगडयुगलेन—कृष्णलौहनिर्म्मितशृङ्खलाद्वयेन, चुम्बितौ—वेष्टितौ, चरणौ—पादौ यस्या तथाभूता, चौराङ्गना इव—तस्करनारीव संयता—बद्धा, कान्यकुब्जे—तदाख्यतद्देशीयप्रधाननगरविशेषे, कारायां—बन्धनागारे। किंवदन्ती—जनश्रुति। अनायकम्—अराजक, साधन—सैन्य, ("साधन मृतसंस्कारे सैन्ये सिद्धौषधौ गतौ" इति मेदिनी)। जिघृक्षु,—आचिक्रमिषु। एतामपि भुव—राज्य, श्रीकण्ठजनपदमित्यर्थ, आजिगमिषति—आगन्तुमिच्छति। विज्ञापिते—निवेदिते, भवतीति शेष। प्रभवति—समर्थो भवति, सोदरप्रियग्रहवर्म्मविशसनप्रतिशोधने, भर्त्तृदारिकाया उद्धारे राज्यरक्षणे च यत् कर्त्तव्य, तत् कर्त्तुमर्हति इति भाव।

(१२०) अनुपेक्षणीयम्—अवर्ज्जनीयेच, नावहेलनीयमित्यर्थ, असम्भावितम्—अतर्कितम्, आकस्मिक—सहसा उपस्थित व्यतिकर—व्यसन, विपदमित्यर्थ, ("अथ व्यतिकर पुंसि व्यसन व्यतिषङ्गयो" इति मेदिनी)। परिभवस्य—अननुभूतस्य अवमानस्य इत्यर्थ, अश्रुतपूर्व्वत्वात्—पूर्वं कदाऽपि अश्रुतत्वादित्यर्थ, ["भूतपूर्वे चरट्" (५।३।५३ पा०) इत्यत्र पूर्व्वनिपातनिर्द्देशात् सत्यत्र शास्त्रे पूर्व्वशब्दस्य पूर्वनिपातनम् इति ज्ञेयम्]। परेति।—परात—शत्रो. अन्यस्माद्वा, य. परिभव,—तिरस्क्रिया, अवमाननमित्यर्थ, ("परिभव परीभावः तिरस्क्रिया" इत्यमरः) तस्य असहिष्णुतया—असहनशीलतया। दर्पबहुलतया—

इव च कम्पमानः पुनरपि समुत्ससर्प भीषणं कृपाणं पाणिः अपरः। (१२५) शस्त्रग्रहणमुदितराजलक्ष्मीक्रियमाणदिष्टवृद्धिविधुतसिन्दूरधूलिः इव कपिलः कपोलयोः अदृश्यत रोषरागः। (१२६) समासन्नसकलमहीपालचूडामणिचक्राक्रमणजाताहङ्कार इव च समारुरोह वामम् ऊरुदण्डम् उत्तानितः चरणो दक्षिणः। (१२७) निष्ठुराङ्गुष्ठकषणनिष्ठुत-

आत्माधीनीकरणार्थञ्च केशाकर्षणं, तस्मै उत्कण्ठा—उद्वेग इत्यर्थः तयैव, स्त्रियाः केशाकर्षणस्य विगर्हिततया तत् कर्तुमुद्यतस्य कम्पोऽजनीति वेदितव्यम्, यद्वा,—कामिनीकचग्रहणं प्रति उत्कण्ठावान् कन्दर्पवशश्च खिन्नाङ्गः कम्पते इति लोके दृश्यते। समुत्ससर्प—उपजगाम, ग्रहीतुम् इति शेषः। कृपाणः—खड्गम्। अपरः,—दक्षिणः। क्रोधस्थायिनः रौद्रस्य तदनुभावस्य स्वेदोद्गमस्य सात्त्विकविकारत्वसम्भावनया शृङ्गारानुकूलतोक्तिः परिपन्थिरसाङ्गपरिग्रहरूपो रसदोषः, "रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि" इत्यालङ्कारिकानुशासनात् इति ज्ञेयम्।

(१२५) शस्त्रेति।—शस्त्रस्य—असेः इत्यर्थः, प्रार्क त्वक्तस्य इति भावः, ["सर्वधातुभ्य ष्ट्रन्" (उ० ४ पा० १५८ सू०) इति ष्ट्रन्] ग्रहणेन—धारणेन, मुदिता—हृष्टा, स्वस्य नाथवत्ताशया इति भावः, या राजलक्ष्मीः,—राजश्रीः, प्रेयसी इति भावः तया क्रियमाणा—विधीयमाना, या दिष्टवृद्धिः,—आनन्दोत्सवः, तया विधुता—विक्षिप्ता, सहर्षं न्यस्ता इत्यर्थः, या सिन्दूरधूलिः,—नागसम्भवपरागः, स्वनामप्रसिद्धः सीसकोद्भूतरक्तवर्णचूर्णविशेषः इति यावत्, ("सिन्दूरं नागसम्भवम्" इत्यमरः) सा इव, कपिलः,—पाटलः, रोषरागः,—कोपजनितशोणिमा।

(१२६) समासन्नेति।—समासन्नानाम्—समुपस्थितानां, सकलानां—सर्वेषां, महीपालानां—राज्ञां, चूडामणयः,—शिरोरत्नानि, तेषां चक्रेण—समूहेन, आक्रमणं—ग्रहणं, प्रणिपातावसरे इति भावः, तेन जातः,—उत्पन्नः, यः अहङ्कारः,—गर्व्वः स इव, मूर्तिमानहङ्कार इवेत्यर्थः, उत्तानितः,—उत्तोलित इत्यर्थः, दक्षिणः,—अपसव्यः, चरणः,—पादः, वामं—सव्यम्, ऊरुदण्डम्—ऊरुः,—सक्थि, दण्ड इव—यष्टिरिव तं, समारुरोह—आचक्राम, आश्रितवान् इत्यर्थः, वामोरौ दक्षिणं चरणमवस्थाप्य आसाञ्चक्रे राज्यवर्द्धन इति भावः। शत्रुनिर्जये निःसंशयत्वख्यापिका वीरत्वव्यञ्जिका च महासत्त्वपुरुषसाधारणी प्रौढासनमुद्रेयम्।

(१२७) निष्ठुरेति।—निष्ठुरं—दृढं यथा तथा, अङ्गुष्ठस्य—पादाङ्गुष्ठस्य घर्षणं,

मे महीयसा मन्युना। तिष्ठन्तु सर्वे एव राजानः करिणश्च त्वया एव सार्द्धम् अयमेको (१३३) भण्डिः अयुतमात्रेण तुरङ्गमाणाम् अनुयातु माम्" (१३४) इत्यभिधाय च अनन्तरमेव प्रयाणपटहम् आदिदेश।

(१३५) तञ्च तथा समादिशन्तम् आकर्ण्य जामिजामातृवृत्तान्तविज्ञानप्रकोपाधानदूयमाने मनसि (१३६) निवर्त्तनादेशेन दूरप्ररूढप्रणयपीड इव प्रोवाच देवो हर्षः,—"किमिव

---

न्वयनम्। महीयसा—अतिमहता, मन्युना—क्रोधेन। तिष्ठन्तु, सर्वेति शेषः। राजानः—अस्मदीयसामन्तनृपाः। करिणः,—गजाः। सार्द्धं—सह विपक्षैश्चेत् राजधानी आक्रान्ता भवेत् तदा तद्रक्षणायेत्याशयः।

(१३३) भण्डिः,—राज्यवर्द्धनस्य मातुलपुत्रः। अयुतमात्रेण—दशसहस्रसङ्ख्यामात्रेण सहेति शेषः तुरङ्गमाणाम्—अश्वानां, दशसहस्राश्वारोहिसैन्यसमेतो भण्डिरित्यर्थः। अनुयातु—अनुसरतु, अल्पमिता परिवृढाया सेनायाः परिच्छदस्वरूपतयैव नियोगः, न साहाय्यार्थेति निगूढाशयः।

(१३४) इति—इत्थम् अभिधाय—आख्याय चकारोऽत्र विनियोगे परत्र समुच्चयत्वात् इति सङ्क्षेपः। प्रयाणपटहम्—युद्धार्थं यात्रासूचकवाद्यविशेषम्।

(१३५) तं—राज्यवर्द्धनं तथा—पूर्वोक्तप्रकारेण, सराजकरिदारिसह समेतस्य हर्षस्य तत्रैवावस्थानमित्यर्थं समादिशन्तम्—आज्ञापयन्तम्। जामीति।—जामिः—स्वसा भगिनीत्यर्थः ("जामिः स्वसृकुलस्त्रियोः" इत्यमरः) जामाता—तनपति [जायां माति इति विग्रहे "नप्तृनेष्टृ—" (उ० २ पा० ९६ सू०) इत्यादिना तृच्] अतिप्रिय इत्यर्थः तच्च कन्यकापतिसम्बन्धाभावात् तथा, यद्वा—जामिः,—भगिनी तस्याः जामाता—धवः, पतिरित्यर्थः, भगिनीपतिरिति यावत्, ("जामाता दुहितुः पत्यौ सूर्यावर्त्ते धवे पुमान्" इति मेदिनी। तस्य वृत्तान्तस्य—कारावासोपरमवार्त्तायाः, विज्ञानेन—अवगत्या यः प्रकोपः—प्रबलक्रोधः, तस्य आधानेन—आवेशेन दूयमाने—सन्तप्यमाने तस्मिन् मनसि—चित्ते, चित्तस्य तादृशावस्थाया निर्देशः।

(१३६) निवर्त्तनादेशेन—निवर्त्तनम्—अनुगमननिवृत्तिः, तस्य आदेशेन—आज्ञया, दूरेति।—दूरम्—अत्यन्तं यथा तथा, प्ररूढा—जाता, प्रणयपीडा—

दोषं पश्यति आर्यो मम अनुगमनेन ? (१३७) यदि बाल इति,—नितरां तर्हि न त्याज्योऽस्मि। (१३८) रक्षणीय इति,—भवद्भुजपञ्जरं रक्षास्थानम्। (१३९) अशक्त इति,—क्व परीक्षितोऽस्मि ? संवर्द्धनीय इति,—वियोगः तनूकरोति। (१४०) अक्लेशसह इति,—स्त्रीपक्षे निक्षिप्तोऽस्मि। सुखम् अनुभवतु इति,—त्वया एव सह तत् प्रयाति। महान् अध्वनः

---

प्रादेशाभङ्ग, अभिमानजदुःखमित्यर्थः यस्य तथाभूत, सोदरैकशरणस्य आत्मन दुःखशोकार्त्ततादृशाया भ्रातुस्त्वयि विधोदासीन्यसूचकादेशश्रवणात् कृतान्यविकाभिमान इत्यर्थः।

(१३७) यदि बाल,—शिशु, इति—इति धिया इत्यर्थः अनुगमने निवर्त्तयसि आर्य इति शेष, तर्हि—तदा मम बालत्वे सति इति भाव, नितराम्—अतिशयेन, अवश्यमेवेति भाव, न त्याज्योऽस्मि—हातव्योऽस्मि, भवता इति शेष, बालकं मां परित्यज्य पितृस्थानीयेन भवता कुत्रापि न गन्तव्यमिति भाव, सदैव नेतव्योऽहम् इति फलितम्।

(१३८) रक्षणीय,—पालनीय, इति—इति धिया, चेदिति शेष, तदपि न त्याज्यमिति भाव, यत भवदिति।—भवत,—तव, भुजपञ्जरं—बाहुपिञ्जर, पञ्जरमध्ये अवस्थितस्य विपत्तेरभावादिति भाव, रक्षास्थानं—शरणास्पदं भवद्भुजपञ्जरे एव स्थितिरेव मम श्रेयस्करमिति भाव, त्वयि गते को मां रक्षिष्यति ? अत, त्वया सदैव मे गन्तव्यमिति निष्कर्ष।

(१३९) अशक्त—अक्षम, इति धियेति चेत ? तत्रोत्तर—क्व—कुत्र, विषये इति शेष, परीक्षितोऽस्मि—समर्थो वा असमर्थो वा इति निरूपितोऽस्मि, भवतेति शेष न कुत्रापि विषये अशक्तोऽहमिति परीक्षितवान् आर्य इति भाव। संवर्द्धनीय—पोषणीय देहस्य पुष्टिं सम्पादनीय इत्यर्थ इति, धियेति चेत वियोग,—भवद्विच्छेद इत्यर्थ, तनूकरोति—कृशीकरोति, निरुत्साहं करोति वा, मामिति शेष, त्वद्वियोगात् जीवनसंशये कुतो वर्द्धनमिति भाव।

(१४०) अक्लेशसह,—न क्लेशं सोढुं शक्त इति—धियेति चेत् ? तत्रोत्तरं,—स्त्रीपक्षे नारीस्थाने निक्षिप्तोऽस्मि—स्थापितोऽस्मि, क्लेशासहतया नारीरूपत्वेनाहं भवता परिगणितोऽस्मीति भाव। सुखम्—आनन्दम् अनुभवतु—भुङ्क्ताम्, इति

क्लेश इति,—विरहोऽविषह्यतरः। (१४१) कलत्रं रक्षतु इति,—श्रीस्ते निस्त्रिंशेऽधिवसति। पृष्ठतः तिष्ठतु इति,—लङ्घति एव प्रतापः। (१४२) राजकम् अनधिष्ठितमिति,—तत् सुहृदम् आर्य्यगुणैः। न बाह्यः सहायो महत इति,—व्यतिरिक्तमिव मां गणयति। अलघुपरिकरः प्रयामि इति,—

---

षीति चेत्? तत्रोत्तरं—तव—सुखं, त्वयि गते नाहं सुखेन स्थास्यामि, मद्दुःखजननायैव तव गमनप्रवृत्तिरिति भावः। अध्वन,—पथः। विरहः,—तव विच्छेदः अविषह्यतरः अतिशयेन सोढुमशक्यः इत्यर्थः, त्वद्वियोगक्लेशात् अध्वपर्य्यटनक्लेशः अतीव सुखह इति भावः।

(१४१) कलत्रं—स्त्रियं, स्त्रीलोकमित्यर्थः। श्रीः,—लक्ष्मीः स्त्रीति भावः, निस्त्रिंशे—असौ [ अधिपूर्व्वकात् वसतेरधिकरणस्य कर्म्मत्वानुशासनात् "निस्त्रिंश" इत्यस्य कर्म्मत्वापत्ति अत्र लङ्कारणात् व्याकरणानुशासनौल्लंघेन ककुद्‌मात्वरूपः दोषः विशेषः ] अधिवसति—तिष्ठति, तव खड्गबलेनैव तत सुरक्षितैव भवति न तत्र मम किमपि उपयोगित्वं सामर्थ्यं वा इति भावः। पृष्ठतः—पृष्ठरक्षानिवारणार्थेति भावः। प्रतापः—कोषदण्डजं तेजः अरातिपरिभाविशक्तिर्व्वा, लङ्घति शेषः तेन पृष्ठदेशतः दूरात् निरस्यन्ते इति भावः, तथा च न मे कापि आवश्यकता इति फलितम्।

(१४२) राजकं राजन्यवर्गः, अनधिष्ठितम्—अनाश्रितम्, अनायकमिति यावत् त्वया मदनुगामिना इति शेषः अयमागमिष्यतीति भावः इति विचार्य्यते चेत्? तत्रोत्तरं—तत्—राजकम् आर्य्यगुणैः,—आर्य्यस्य—भवतः इत्यर्थः गुणाः,—शौर्य्यदाक्षिण्यादयः तैः सुहृदं—सुसंगतम् अतिशयेन अधीनीकृतमिति यावत्, इदानुरागरूपाभुग्नप्रतापमहत्त्वाश्रयतानां परित्यक्तुमाशयादपि न शक्नुते इत्याशयः। महतः—महानुभावस्य, बाह्यः,—बहिः स्थितः इतरः इत्यर्थं सहायः—सहकारीत्यर्थ, न, उपयुज्यते इति शेषः स्वनैव सर्व्वार्थसाधनादिति भावः, इति—इत्यवगम्यते चेत्? तत्रोत्तरं—व्यतिरिक्तमिव—भिन्नमिव अनात्मीयमिवेति, मां गणयति विचारयति, आर्य्यः इति शेषः, नाहम् आर्य्याद्भिन्नः, तदेवांशभूत इति भावः। अलघुपरिकरः—स्वल्पपरिच्छदः, अल्पपरिजन इति यावत्, आडम्बरामुक्ते गमनविघ्नादिति भावः, प्रयामि—गच्छामि, इत्यादिश चेत्?

पादरजसि कोऽतिभार. ? (१४३) द्वयोः गमनम् असाम्प्रतमिति,—माम् अनुगृह्णाण गमनाज्ञया। कातरो भ्रातृस्नेह इति,—सदृशो दोषः। (१४४) का इयम् आत्मम्भरिता भुजस्य ते, यत् एकाकी क्षीरोदफेनपटलपाण्डरम् अमृतमिव यशः पिपासति ? (१४५) अवञ्चितपूर्व्वोऽस्मि प्रसादेषु।

तत्रोत्तर—पादरजसि—चरणधूलौ, तत्सदृशे मयि इति भाव, अतिभार—गुरुत्वबोध इति यावत्, पादसक्त रज यथा नातिभारभूत भवति, तद्वत् अहमपि ज्ञातव्य त्वयेति भाव ।

(१४३) द्वयो,—उभयो आवोरिति भाव । असाम्प्रतम्—अयुक्त, नगरस्य रक्षिविभावादिति भाव । अनुगृह्णाण—अनुकम्पस्व, मामेव गमनाय अनुमन्यस्व, त्वमिहैव तिष्ठ इति समुदितवाक्यार्थ । उत्तरमिदम् आत्मन एव प्राथमिकाभियानप्रार्थनरूपमित्यवधातव्यम । एतेन सिंहासनादिरक्षा भवत्प्रतापेन सुसाध्या, तत्र हि विपक्षनिग्रह ममैवानायाससाध्य इति व्यज्यते। कातर—भीत, विपदाशङ्कया आकुल इत्यर्थ, विपत्सङ्कुल रणक्षेत्रे त्वां नेतुं बिभेमि इति चेत् इति भाव सदृश—तुल्यसम्बन्धवत सोदरद्वयस्य इत्यर्थं, भावाभावयो उभयत्र समानसुखदु खदायकत्वात इति भाव, यद्वा,—सदृश,—तुल्य दोष—दूषणम, अनिष्टशङ्का इत्यर्थ, मयि भ्रातरि स्नेहात तव यादृशी दोषाशङ्का त्वयि भ्रातर्य्यपि सहजभक्तिभावात् ममापि तादृशी एव अनिष्टाशङ्का इति भाव ।

(१४४) ["का इयम्" इत्यत्र "का चेयम्" इति पाठान्तरम्]। आत्मम्भरिता—स्वार्थैकपरतेति भाव । ["फलेग्रहिरात्मम्भरिश्च" (३।२।२६ पा०) इत्यात्मनो मुमागम भृञ इन निपात्यते] क्षीरोदेति।—क्षीरोदस्य क्षीरसागरस्य फेनपटल—फेनराशि तद्वत पाण्डुर—शुभ्र यश—कीर्त्ति, शत्रुनाशजनितमिति भाव, एकाकी—एक एव, पिपासति ?—पातुमिच्छति ? अनुजीविजन वञ्चयित्वा एकाकी एवाहं तादृशयश.पीयुष पास्यामि इति पिपासुता तव भुजस्य अतीव स्वार्थपरता इत्यहो ! ईदृशी स्वार्थपरता तु नोचिता इति भाव ।

(१४५) भवत्वेकाकिन एव पिपासुता, तत्र को दोष ? इत्यत्राह, अवञ्चितेति।—प्रसादेषु—अनुग्रहेषु अवञ्चितपूर्व्व,—अप्रतारितपूर्व्व, प्राक त्वया कदापि न प्रतारित इत्यर्थ, इत पूर्वं सदैव तव प्रसादमुपभुज्य कृतार्थो भवम्, इदानीमपि तदधिकारात् मा वञ्चयस्व इति भाव ।

तत् प्रसीदतु आर्य्यः, नयतु मामपि" इत्यभिधाय क्षितितल-विनिहितमौलिः पादयोः अपतत्।

(१४६) तम् उत्थाप्य पुनः अग्रजो जगाद,—"तात! किमेवम् अतिमहारम्भपरिग्रहणेन गरिमाणम् आरोप्यते बलात् अतिलघीयानपि अहितः? (१४७) हरिणार्थम् अतिक्षेपणः सिंहसम्भारः। तृणानाम् उपरि कति कवचयन्ति आशुशुक्षणयः? अपि च तव (१४८) अष्टादशद्वीपाष्टमङ्गलक-मालिनी मेदिनी अस्ति एव विक्रमस्य विषयः। न हि कुल-

---

(१४६) त—हर्षम्, उत्थाप्य—उत्तोल्य। अग्रजः—ज्येष्ठः, राज्यवर्द्धन इत्यर्थः। तात!—वत्स! अतीति।—अतिमहान्—भूयान् इत्यर्थः आरम्भः,—उद्योगः, तस्य परिग्रहणम्—आश्रयणं तेन अतिलघीयानपि—अतिक्षुद्रोऽपि, अहितः—शत्रुः, बलात्—बलेनापि, निरर्थकमिति भावः गरिमाणम्—गौरवम्, आरोप्यते—नीयते, त्वयेति शेषः, महारम्भेण लघुसत्त्वे महाप्रतिभटता समारोपिता भवेत् इति निगूढाशयः।

(१४७) हरिणार्थे—मृगवधार्थमित्यर्थः, सिंहसम्भारः,—सिंहस्य—मृगेन्द्रस्य, सम्भारः—विपुलप्रयास इत्यर्थः अतिक्षेपणः,—अतिलज्जाकरः, क्षुद्रहरिणवधार्थं सिंहस्य सायासक्रमणं यथा लज्जाजनकं निष्प्रयोजनञ्च तथा अतिलघुमालव-विनाशाय उभयोरेव गमनमतीव लज्जाकरं निष्प्रयोजनञ्चेति निष्कर्षः। कति—कियन्तः [ "किमः—" (५।२।४१ पा०) इत्यादिना सङ्ख्यापरिमाणार्थे डतिप्रत्ययः ] आशुशुक्षणयः,—अग्नयः, ( "अग्निर्वैश्वानरो वह्निः। शिखावानाशुशुक्षणिः॥" इत्यमरः ) कवचयन्ति—सन्नह्यन्ति, तृणदाहनार्थं कवचावृतशरीराः सन्तः सज्जिता भवन्तीत्यर्थः, स्फुलिङ्गमात्रसंयोगेनैव तृणानि पवनीभूय अनलेन भस्मावशेषाणि क्रियन्ते, अतः तृणवल्लघुमालवविनाशाय विपुलायोजनं दीप्ततेजसस्ते गमनञ्च निरर्थकमेवेति भावः।

(१४८) अष्टादशेति।—अष्टादशद्वीपान्येव अष्टमङ्गलकानि—कल्याणानि, क्षौणीभागव्यवहारे कल्पम् इति भावः, तेषां माला—श्रेणिः विद्यते अस्याः तथाभूता, यद्वा—अष्टादशद्वीपानि, "लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः। हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः॥" इत्युक्तानि अष्टमङ्गलकानि च, तेषां माला विद्यते यस्याः तादृशी। विषयः,—स्थानम्, अष्टादशद्वीप इत्यत्र-

शैलनिवहवाहिनो वायवः सन्नह्यन्ति अतितरले तूलराशौ। (१४९) न सुमेरुवप्रप्रणयप्रगल्भा वा दिक्करिणः परिणमन्ति अणीयसि वल्मीके। (१५०) गृह्णीष्व सकलपृथ्वीपतिप्रलयोत्पातमहाधूमकेतुं मान्धाता इव चारुचामीकरपत्रलताऽलङ्कराङ्ककायं कार्मुकं ककुभां विजये। मम तु

समन्विता मेदिन्यपि त्वया जेतुं समर्था, अत अतितुच्छमालवजये तव प्रयाणं सर्वमकृत्य सागरं तर्तुं समर्थस्य गोष्पदोत्तरणाय तरणीसङ्ग्रह इव प्रतिभाति इति भावः।

कुलेति।—कुलशैलानां—महेन्द्रादीनां प्रागुक्तानां सप्तानां कुलपर्वतानां, निवहान्—समूहान्, सप्त इति यावत्, वहन्ति—प्रापयन्ति स्थानात् स्थानान्तरं नेतुं प्रभवन्तीत्यर्थः ये तथाभूताः। अतितरले—अतिचपले, अतिलघौ इत्यर्थः। सन्नह्यन्ति—वर्धयन्ति, कवचेन स्वदेहं सन्नह्य तीव्रं पराक्रमं प्रदर्शयन्तीति भावः, तूलराशिवत् निःसारमालवोन्मूलनाय कुलाचलवहनदक्षस्य तव बलोन्मूलनसमर्थस्य तव गमनं निष्प्रयोजनमेव इति निष्कर्षः।

(१४९) सुमेर्विति।—सुमेरोः—काञ्चनाद्रेः, वप्रेषु—तटेषु, ("वप्रस्तातेः पुमान्स्त्री रेणौ चव चये तटे" इति मेदिनी) ये प्रणयः—समासक्तिः, तत्र वप्रक्रीडायामिति भावः तेन प्रगल्भाः—धृष्टाः दुर्ललिता इति भावः, दिक्करिणः—दिग्गजाः, अणीयसि—अतिक्षुद्रे, वल्मीके—"उयीढिपि" इति वङ्गभाषया प्रसिद्धे वल्मीकाख्यकीटनिर्मिते अतितुच्छे मृत्पिण्डे इत्यर्थः, न परिणमन्ति—न तिर्यग्भावेन दन्तप्रहारकारिणो भवन्तीत्यर्थः, ("तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः" इति कोषात्) तत्र न वप्रक्रीडामाचरन्तीति भावः, सुमेरुतटभञ्जनसक्षमस्य दिग्गजस्य वल्मीकस्तूपोन्मूलनप्रयास इव अवलीलया महासुरराजन्यसङ्घविनाशनसमर्थस्य ते मालवराजविनाशाय गमनेच्छा न साधीयसी इति निष्कर्षः।

(१५०) मान्धाता इव—युवनाश्वतनयप्रवीरचक्रवर्तिनृपविशेष इव सकलेति।—सकलानां—सर्वेषां, पृथ्वीपतीनां—भूपालानां प्रलये—संहारे, यः उत्पातः—उपद्रवस्यचकः इति यावत्, महान्—दारुण इत्यर्थः, धूमकेतुः—उपग्रहविशेषस्तं, तन्निभमिति भावः चार्विति।—चारुभिः—मनोज्ञैः, चामीकरपत्रलताऽलङ्कारैः—सौवर्णपत्रभङ्गिरचितभूषाभिः अङ्कः—चिह्नं यस्य तादृशः कायः—अवयवो यस्य तथाभूतं, कार्मुकं—धनुः ककुभां—दिशां, विजये—विजयार्थम् इत्यर्थः, गृह्णीष्व इत्यन्वयः, दिग्विजयायैव तव प्रयाणमुचितं, न तु क्षुद्रमालवविजयायेति भावः। कियदनन्तरमेव विजयलक्ष्मीवधूकरग्रहणमरायं भवतैव सम्पाद्य

(१५१) दुर्निवारायाम् अस्यां विपक्षक्षपणक्षुधि क्षुभितायां क्षम्यताम् अयम् एकाकिनः कोपकवल एकः। तिष्ठतु भवान्" इत्यभिधाय च तस्मिन् एव वासरे निर्जगाम अभ्यमित्रम्।

अथ (१५२) तथा गते भ्रातरि, उपरते च पितरि, प्रोषितजीविते च भगिनीपतौ, मृतायाञ्च मातरि, संयतायाञ्च स्वसरि, स्वयूथभ्रष्ट इव वन्यः करी देवो हर्षः कथञ्चिदपि एकाकी कालं तम् अनैषीत्। (१५३) अतिक्रान्तेषु बहुषु वासरेषु कदाचित् तथैव भ्रातृगमनदुःखासिकया दत्तप्रजागरः

---

नीयम् इति राज्यवर्द्धनवाक्याशय। सन्दर्भेऽस्मिन् हरिणादयो सिंहसभारादीनाम् अप्रस्तुतानां समुपन्यस्तानां प्रस्तुते गमननिषेधरूपे एव कार्य्ये पर्य्यवसानात् निमित्तकार्य्य-व्याजचमत्कृतिनिचयाऽप्रस्तुतप्रशंसाऽलङ्कृति माध्यातिवलुप्तया सङ्कीर्णत्वमगन्तव्यम्।

(१५१) दुर्निवारायां—कथमपि निवारयितुमशक्यायां, क्षुभितायाम—उद्दीप्तायां, विपक्षक्षपणक्षुधि—शत्रुविध्वंसनरूपायां क्षुधायाम, एकाकिन,—अद्वितीयस्य, मम इति शेष, एक,—एकमात्र कोपकवल,—क्रोधग्रास, क्षम्यतां—सह्यताम्, एकमात्र ममैव कोपकवलविषयी मालवकुलपांसनो भवतु, न तव गमनमत्रावश्यकम् आकलयामि इति भाव। वासरे—दिवसे। अभ्यमित्रम—अमित्रम्, शत्रु प्रति इत्यर्थ। ["लक्षणेनाभिप्रती—" (२।१।१४ पा०) इत्यादिना समास]।

(१५२) तथा—युद्धार्थमिति यावत। उपरते—मृते। भगिनीपतौ—ग्रहवर्म्मणि इत्यर्थ, ["भगिनीपतौ" इत्यत्र "जामातरि" इति पाठेऽपि स एवार्थ, व्याख्यानादवगन्तव्य। दुहितृपत्यर्थे प्रयुक्तस्य जामातृशब्दस्य भगिनीपत्यर्थे प्रयोगस्य यद्यपि न समीचीनता तथाऽपि असाधारणपरिचायकतया लोकव्यवहारदर्शनात् तथाविध प्रयोग न दोषाय इति समाधानीयम, ज्येष्ठभ्रातु पितृतुल्यत्वात तथाविध प्रयोगो वा इति] प्रोषितजीविते—गतासौ इत्यर्थ। स्वसरि—भगिन्या राज्यश्रीनाम्न्यां, संयतायां—काराकद्धायाम्। स्वयूथभ्रष्ट—निजसङ्घच्युत, वन्य करीव—आरण्यगज इव। अनैषीत्—अतिवाहयामास।

(१५३) अतिक्रान्तेषु—अतीतेषु। तथैव—प्रागनुभूतयेवैवर्थं, भ्रातृगमन-पथे यद्दुःखमनुभूत, तेनैव दुःखितेनेत्यर्थ, भ्रातृगमनदुःखासिकया—भ्रातु,—ज्यायस्य, गमन—प्रयाण, लोकपरित्यागेन इति भाव, तेन या दुःखासिका—

त्रिभागशेषायां त्रियामायां यामिकेन गीयमानाम् इमाम् आर्याम् शुश्राव,—

द्वीपोपगीतगुणमपि समुपार्जितरत्नराशिसारमपि।
पोतं पवन इव विधिः पुरुषमकाण्डे निपातयति ॥ २ ॥

(१५४) तां च श्रुत्वा सुतराम् अनित्यताभावनया दूयमानः

---

दुःखावस्थाम् तेन, दृष्टेति।—दृष्ट,—जनित इत्यर्थः, प्रजागरः,—दीर्घजागरणं यस्य तथाभूतः, त्रिभागेति।—त्रिभागः,—तृतीयः अंशः, चरमप्रहर इत्यर्थः, शेषः,—अवशिष्टः यस्याः तथाभूतायां, त्रियामायां—रात्रौ "त्रियामा रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम्" इति समयनिर्णयकाराः, यामिकेन—प्रहरिणा प्रहरपालेन इति यावत्। इमां—वक्ष्यमाणामित्यर्थः।

यामिकेन यदृच्छया पठितां विधिविलसितवर्णनात्मिकां राजकुलस्य भावि अशुभं सूचयन्तीमाह, द्वीपेति।—विधिः,—दुर्दैवमिति यावत्, पवनः,—प्रतिकूलवायुरिति भावः, पोतमिव—नावमिव, अर्णवयानमिव इत्यर्थः, ["हसिमृग्रिण्—" (उ० ३ पा० ८६ सू०) इति पुनाते पवते इत्यस्य वा तन्] द्वीपेषु—द्वयोरेव दिशोः अद्भिः परिवेष्टितेषु स्थानेषु, ("द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्" इत्यमरानुशासनात्) जलमध्यस्थस्थलभागार्थकतया उभयतः जलवेष्टितभूभागेषु इत्यर्थः, ["ऋक्पूर—" इत्यप्रत्यये कृते, तत "द्व्यन्तरुपसर्गेभ्योऽप ईत्" (६।३।९७ पा०) इति सूत्रेण अपस्य ईत्, तथा हि, द्वीर्गता द्विर्गता आपो यस्मिन्निति द्वीपम्] तथा सप्तसु अष्टादशसु वा इति भावः, उपगीताः—कीर्त्तिताः, गुणाः,—शौर्यदाक्षिण्यादयः, अभङ्गुरत्व-मनोज्ञत्वादयश्च यस्य तथाभूतमपि समुपार्जितरत्नराशिसारमपि—समुपार्जितः—करात् जयेन लब्धः, वणिग्व्यापारित्वात् स्वशक्त्या गृहीत इत्यर्थः, रत्नराशीनां—मणिसमूहानां, सारः,—उत्कृष्टांशः, उभयत्रापि समानः येन तथाविधमपि पुरुषम्—नरश्रेष्ठमिति यावत्, अकाण्डे—सहसा, निपातयति—विनाशयति। एतेन राज्यवर्द्धनस्य मरणं सूचितम्। इह पोतेन सह पुरुषस्य साम्यबोधनात् उपमा, द्वीपोपगीतगुणादिरूपविशेषणस्य श्लिष्टत्वाद् श्लेषसङ्कीर्णा, अकाण्डे इत्यादिना इत्युक्त्या राज्यवर्द्धनस्यावश्यं पतनम् आशु भविष्यति इत्यलङ्कारोत्थापितं वस्तु व्यङ्ग्यम् इति सङ्क्षेपः। आर्या वृत्तम् ॥ २ ॥

(१५५) ताम्—आर्याम्। सुतराम्—अतिशयेन, अनित्यताभावनया—

हृदयः प्रक्षीणभूयिष्ठायां क्षपायां क्षणमिव निद्राम् अलभत; स्वप्ने च अभ्रंलिहं लोहस्तम्भं भज्यमानम् अपश्यत्। (१५५) उत्कम्पमानहृदयश्च पुनः प्रत्यबुध्यत, अचिन्तयच्च,—"किं नु खलु माम् एवम् अमी सततम् अनुबध्नन्ति दुःस्वप्नाः? स्फुरति च दिवानिशम् अकल्याणाख्यानविचक्षणम् अदक्षिणम् अक्षि। (१५६) सुदारुणाश्च अक्षुद्रक्षितिपक्षयम् आचक्षाणाः क्षणमपि न शाम्यन्ति पुनरुत्पाताः। प्रत्यहं (१५७) राहुः अविकल-

---

समारोऽयम् अनित्य, तेन हि अवस्था सर्व नियतमेव जराव्याध्यादिभि पीड्यन्ते, कति च महापुरुषा अकाल कालकवलिता भवन्ति, नास्ति तेषामियत्ता, न केचिदपि अत्र स्थिरा इत्यादि चिन्तया, दूयमानहृदय —सन्तप्यमानचित्त, प्रक्षीणभूयिष्ठायां—प्रायेण क्षय गतायामित्यर्थं अल्पमेवावशिष्टायामिति भाव, क्षपायां—रात्रौ, क्षणमिव—अत्यल्पकालमिव, [ व्याप्त्यर्थं द्वितीया ] इवशब्दोऽत्र वाक्यालङ्कारे। अभ्रंलिह —गगनचुम्बिनम, अत्युन्नतमित्यर्थं, मेघमार्गभेदितया गगनस्पृशमिति यावत। [ "वहाभ्रे लिह" (३।२।३२ पा० ) इति खश्प्रत्यय ] भज्यमान —खण्ड्यमान द्विधा क्रियमाणमित्यर्थं, केनापि इति शेष। एतद्धि दुःस्वप्नदर्शन भाव्यनिष्टसूचकमिति ज्ञेयम्।

(१५५) उत्कम्पमानहृदय —वेपमानवक्षा इत्यर्थ। प्रत्यबुध्यत—अजागः। किं नु—वितर्के। एवम्—अनेन प्रकारेण। अनुबध्नन्ति—अनुसरन्ति। दिवानिशम्—अहोरात्रम, अकल्याणेति।—अकल्याणम—अशुभम, आख्यान—कथन, तत्र विचक्षण—निपुणम, अशुभसूचकमित्यर्थं, अदक्षिण—वाम, प्रतिकूलञ्च, अक्षि—चक्षु, स्फुरति च—स्पन्दते च।

(१५६) पुन,—पश्चान्तरे, अपि चेत्यर्थक वा सविशेषपर्यालोचनानुभूतत्वात् पितृपरलोकवासात् प्राक् पर्य्यवेक्षणाच्च इति ज्ञातव्य सुदारुणा,—अतिभयङ्करा, अक्षुद्रेति।—अक्षुद्रस्य—महत, श्रेष्ठस्य इत्यर्थ, क्षितिपस्य—राज्ञ, क्षय,—नाशम, आचक्षाणा,—कथयन्त, सूचयन्त इत्यर्थं, उत्पाता,—उत्पतन्ति—अशुभसूचनार्थम् आविर्भवन्तीति तथोक्ता, अशुभनिदानभूता भूकम्पोल्कापातादय इत्यर्थं न शाम्यन्ति—न विरमन्ति।

(१५७) राहु,—सिंहिकासुत, अविकलेति।—न विकल,—विपन्न;

(१६७) जीवितधारणलज्जया इव अवनतमुखं, नासावंशस्य अग्रे ग्रथितदृष्टिं, (१६८) दुःखदूरप्ररूढलोम्ना मूकेनापि मुखेन (१६९) स्वामिव्यसनम् अविच्छिन्नैः अश्रुबिन्दुभिः विज्ञापयन्तं, कुन्तलं नाम बृहदश्ववारं राज्यवर्द्धनस्य प्रसादभूमिम् अभिजाततमं ददर्श। दृष्ट्वा च (१७०) जाताशङ्कः चक्षुषि सलिलेन, मुखमार्गेण श्वसितेन, हृदये हुताशेन, उत्सङ्गे भुवा, दारुणाप्रियश्रवणसमये सममिव सर्व्वेषु अङ्गेषु अगृह्यत लोकपालैः।

---

(१६७) जीवितेति।—जीवितस्य—प्राणानां, धारणं—रक्षणमित्यर्थः, तेन या लज्जा—त्रपा तया इव, प्रभोर्जीवनरक्षणासामर्थ्यात् तद्विना विश्लेषेऽपि स्वजीवनापरित्यागादिति वा भावः। नासावंशस्य अग्रे—नासिकाग्रभागोपरि, ग्रथितदृष्टिं—निबद्धचक्षुषं, महालज्जया किमप्यन्यदपश्यन्तमिति भावः।

(१६८) दुःखेति।—दुःखेन—क्लेशेन हेतुना, दूरम्—अत्यन्तं, प्ररूढानि—जातानि क्षौरकर्म्माकरणात् प्रवर्द्धितानि इति भावः, लोमानि—श्मश्रुराजयः यस्मिन् तेन ["दुःखदूरप्ररूढलोम्ना" इत्यत्र "दुःखदूरप्ररूढरोम्णा" इति पाठेऽपि स एवार्थः, रलयोरभ्यासकृदाख्या वृत्त्यनुप्रासोऽलङ्कारः] मूकेनापि—वाग्व्यापाररहितेनापि, किमपि अकथयन्तमपीति भावः।

(१६९) स्वामिव्यसनं—स्वामिनः—प्रभोः, राज्यवर्द्धनस्येति यावत्, व्यसनं—विपत्तिं, विनाशम् इत्यर्थः, ("व्यसनं विपदि भ्रंशे" इत्यमरः)। अविच्छिन्नैः—अविरलप्रवृत्तैः धारावाहिभिरित्यर्थः। बृहदश्ववारं—महान्तमश्वारोहिसैनिकमित्यर्थः, भूतपूर्व्वप्रहरणकौशलप्रदर्शनजनितपरितोषप्राप्ताधिकारमित्याशयः। प्रसादभूमिं—कृपापात्रम्। अभिजाततमं—महाकुलसम्भूतम्।

(१७०) जाताशङ्कः,—भीतः। सलिलेन—जलाधिपतिना वरुणेन इत्यर्थः, सलिलस्य जडतया कस्यचिद्ग्रहणासम्भवात्, अन्यथा स्वाधीश्वरादिव्यपुरुषप्रत्यायनादिह लक्षणा इति अङ्गीकृता इति सङ्क्षेपः, अविच्छिन्नधाराभिरश्रुभिः रुरोद इति तात्पर्यम्। श्वसितेन—निश्वासवायुना। हुताशेन—वह्निना। उत्सङ्गे क्रोडे, देहे इति भावः, भुवा—पृथिव्या। दारुणेति।—दारुणस्य—भीषणस्य, कठोरस्येत्यर्थः, अप्रियस्य—अशुभवार्त्तायाः, श्रवणसमये—श्रवणकाले, सममिव—युगपदिव। लोकपालैः,—राजा, हर्षः इत्यर्थः। ["लोकपालैः" इत्यत्र "लोकपालः" इति

(१७४) रोषाग्निम् उद्वमन्, अनवरतस्फुरितेन पिबन् इव सर्वतेजस्विनाम् आयूंषि रोषनिर्भुग्नेन दशनच्छदेन, (१७५) लोहितायमानलोचनालोकविक्षेपैः दिग्दाहान् इव दर्शयन्, रोषानलेन अपि (१७६) असह्यसहजशौर्य्योष्मदहनदह्यमानेन इव वितन्यमानस्वेदसलिलशीकरासारदुर्दिनः, (१७७) स्वावयवैः अपि अदृष्टपूर्वप्रकोपभीतैः इव कम्पमानैः उपेतः, हर इव (१७८) कृतभैरवाकारः, हरिरिव प्रकटितनरसिंहरूपः,

---

द्योतक इति ज्ञेयम्, अन्यथा उपमाप्रकृतिकधीरोदात्ते कोऽपि विरोधारोप स्यात् इत्यवधातव्यम्।

(१७४) रोषाग्निं—क्रोधानलम्, उद्वमन्—उद्गिरन्। अनवरतस्फुरितेन—अविरलस्पन्दितेन, रोषनिभुग्नेन—क्रोधदष्टेन इत्यर्थः क्रोधवक्रीकृतेन वा, दशनच्छदेन—अधरेन, सर्वतेजस्विना—सकलप्रतापवतां, प्रतिपक्षवीरसमूहानामित्यर्थः, आयूंषि—जीवितकालान्।

(१७५) लोहितायमानेति।—लोहितायमानयो,—रक्ततामापद्यमानयो,लोचनयो',—नयनयो, आलोकविक्षेपैः,—प्रभाविसरणैः। दर्शयन्—प्रकटयन्।

(१७६) असह्येति।—असह्यस्य—सोढुमशक्यस्य, सहजस्य—स्वाभाविकस्य, शौर्यस्य—वीर्यस्य उष्मा—सन्ताप, सञ्च इत्यथ स एव दहन,—अग्नि, तेन दह्यमान,—प्रज्वल्यमान तेन इव, वितन्यमानेति।—वितन्यमान,—विस्तीर्यमाण, स्वेदसलिलाना—घर्म्मजलाना, शीकरासार,—बिन्दुधारासम्पात एव, दुर्दिन—वर्षणं यस्मिन् तथाभूत, स्वय क्रोधानलोऽपि तस्य वीर्यवह्निना दह्यमान स्वदाहज्वालाशमनार्थं तस्मात् स्वेदसलिल निःसार्य्य तेन आत्मान सिञ्चति इव इति भाव, दृश्यते च लोके दह्यमान जलेनात्मानम् अभिवर्षति इति स्वेदाप्लुतकलेवरो जात इति निष्कर्षः।

(१७७) स्वावयवैः,—निजाङ्गैः, अदृष्टेति।—अदृष्टपूर्वात्—पूर्व्वमदृष्टात कदाऽपि क्रोधाकरणादिति भाव, प्रकोपात्—प्रबलरोषात्, भीता,—शङ्किता तै इव, उपेत,—युक्त, क्रोधकम्पितकलेवर इत्यर्थः।

(१७८) कृतेति।—कृत,—जनित इत्यर्थः, भैरव,—भीषण, आकार,—मूर्त्तिः, अन्यत्र—कृत,—धृत, भैरवस्य—सम्मूर्त्तिभेदस्य, आकार येन तथाभूत। प्रकटितेति।—प्रकटित—प्रकाशित, नरसिंहस्य—नर सिंह इव इत्युपमितसमासात्

(१७९) सूर्यकान्तशैल इव अपरतेजःप्रसरदर्शनप्रज्वलित, (१८०) क्षयदिवस इव उदितद्वादशदिनकरदुर्निरीक्ष्यमूर्तिः, महोत्पातमारुत इव सकलभूभृत्कम्पकारी, विन्ध्य इव (१८१) विवर्द्धमानविग्रहोत्सेध, महाऽऽशीविष इव दुर्नरेन्द्राभिभवरोषित, (१८२) पारिक्षित इव सर्वभोगिदहनोद्यत,

प्रमत्ता नर नरसिंह तस्य, (तथा चामर —"स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जरा। सिंहशार्दूलनागाद्या पुंसि श्रेष्ठार्थगोचरा॥" इति) यद्वा—वपुषि नर मुखे च सिंह इव तस्य, नृसिंहाकारमूर्तिर्भेदस्य च, [नीललोहितवत् समास] रूपम्—आकार, येन तथोक्त।

(१७९) सूर्यकान्तशैल इव—सूर्यकान्तमणिमयपर्वत इव, अपरेति।—अपरस्य—विपक्षस्य सूर्यस्य च इति भाव, तेजसा—प्रतापानां, प्रभायाश्च, प्रसरस्य—विकासस्य, दर्शनेन—अवलोकनेन, प्रज्वलित,—प्रदीप्त, सूर्यकान्तमणि सूर्यकिरणसम्पर्कात् प्रज्वलति इति प्रसिद्ध।

(१८०) क्षयदिवस इव—कल्पान्तदिनमिव, ("क्षय कल्पान्त इत्यपि" इत्यमर)। उदितेति।—उदितानाम—उदय गतवतां, द्वादशानां—द्वादशसङ्ख्यकानां दिनकराणां—सूर्याणामिव, दुर्निरीक्ष्या—निरीक्षितुमशक्या, लोकैरिति भाव, मूर्त्ति,—आकार यस्य तथाभूत। महोत्पातमारुत इव—प्रचण्डझञ्झावात इव, सकलेति।—सकलानां—सर्वेषां, भूभृतां—राज्ञां, पर्वतानाञ्च, कम्पकारी—वेपनहेतु, भयात् सञ्चालनाच्चेति भाव।

(१८१) विवर्द्धमानेति।—विवर्द्धमान,—विशेषेण वृद्धिं गच्छन, क्रोधेन उन्नमनेन च इति भाव, विग्रहस्य—सङ्ग्रामस्य, देहस्य च, उत्सेध—उद्योग इति भाव, उच्छ्रायश्च यस्य तथाभूत। महाऽऽशीविष इव—महान् भुजङ्ग इव दुर्नरेन्द्रेति।—दुर्नरेन्द्रस्य—दुर्विनीतस्य राज्ञ, गौडाधिपतेरित्यर्थ विषवैद्यस्य च, ("नरेन्द्रस्तु महीपाले विषवैद्ये च पूरुषम्" इति मेदिनी) अभिभवेन—पराजयेन, अविनयकरणेन, गरुडादिमन्त्रप्रयोगकरणेन च इति भाव, रोषित,—कोपित।

(१८२) पारिक्षित इव—परिक्षित अपत्य पुमान् पारिक्षित,—जनमेजय इव, ["तस्यापत्यम्" (४।१।९२ पा०) इत्यण्] सर्वेति।—सर्वेषां—समस्तानां, भोगिनां—सुखभोगरतानां परिपन्थिराजानामित्यर्थं, सर्पाणाञ्च, ("भोगी भुजङ्गमे ग्रामण्या नृपे पुमान्" इति मेदिनी) दहने—भस्मीकरणे, सर्पाग्नौ इति सात्

(१८३) वृकोदर इव रिपुरुधिरपानतृषितः, सुरगज इव प्रतिपक्षवारणप्रधावितः, (१८४) पूर्व्वागम इव पौरुषस्य, उन्माद इव मदस्य, (१८५) आवेग इव अवलेपस्य, तारुण्यावतार इव तेजसः, सर्व्वोद्योग इव दर्पस्य, (१८६) युगागम इव यौवनोष्मणः, राज्याभिषेक इव समररसस्य, नीराजनदिवस इव असहिष्णुतायाः परां भीषणताम् अयासीत्।

---

सर्पमेधयज्ञेन च इति भाव, उद्यत,—प्रहृत्त। पुरा पितरि परिक्षिति तक्षकेण नागेन दष्टे मृते च सति क्रुद्धो जनमेजय सर्पकुलजिघांसया सर्पमेधयज्ञमन्वतिष्ठत् इति वार्त्ता भारतीया अत्र अनुसन्धेया।

(१८३) वृकोदर इव—भीमसेन इव, रिपुरिति।—रिपो,—शत्रो, गौडाधिपस्य द्रौपद्या वेण्या कर्षकस्य दुःशासनस्य च इत्यर्थ, रुधिरपाने—रक्तपाने, तृषित,—तृष्णान्वित, अनुबधार्थी इति यावत्। [ "रिपुरुधिरपानतृषित" इत्यत्र "रिपुरुधिरतृषित" इति पाठे,—रिपो रुधिराय—रक्तपानायेत्यर्थ, तृषित,—पिपासित, जाताकाङ्क्ष इत्यर्थ ]। सुरगज इव—ऐरावत इव, प्रतिपक्षेति।—प्रतिपक्षस्य—शत्रो, वारणाय—दमनाय, प्रतिपक्षवारणाय—प्रतिद्वन्द्विगजाय च, प्रधावित,—चलित। अत्र भूयसा साम्यप्रदर्शनात् श्लिष्टा मालोपमाऽलङ्कार।

(१८४) पौरुषस्य—पुरुषकारस्य, पराक्रमस्य इत्यर्थ, पूर्वागम इव—प्रथमोपस्थिति इव, प्रथम मूर्त्तिमान् पराक्रम इव इत्यर्थ। मदस्य—सौभाग्ययौवनादिजनितावलेपस्य, उन्माद इव—उन्मत्तभाव इव समुद्धतो मद इव इत्यर्थ।

(१८५) अवलेपस्य—गर्व्वस्य, आवेग इव—त्वरा इव, विग्रहवान् गर्व्वप्रसर इव इत्यर्थ। तेजस,—प्रतापस्य, तारुण्यावतार इव—यौवनाविर्भाव इव, अभिनवोत्पन्न मूर्त्तिमान् प्रताप इव इत्यर्थ। दर्पस्य—अहङ्कारस्य सर्वोद्योग इव—पूर्णोद्यम इव, सर्वथा समुद्गतस्य मूर्त्तिमतो दर्पस्य प्रयत्नसङ्ग इव इत्यर्थ।

(१८६) यौवनोष्मण —यौवनस्य—तारुण्यस्य, उष्मा—उत्ताप तस्य, युगागम इव—नवयुगावतार इव, देहधारी यौवनगर्व्व इवेत्यर्थ। समररसस्य—सङ्ग्रामानुरागस्य, [ "समररसस्य" इत्यत्र "रणरसस्य" इति पाठोऽपि स एवार्थ ] राज्याभिषेक इव—राजकर्म्मणि अभिषेचनमिव, नवे राज्येऽभिषिक्त सङ्ग्रामरस इव कायवान् इत्यर्थ। असहिष्णुताया,—अक्षमाया, शत्रुनिधने कालविलम्बासहनशीलतायाः इत्यर्थ, नीराजनदिवस इव—शान्तिकर्म्मविशेषवासर इव तनुमान् इत्याशय, राज्ञां

अथादीच्च,—(१८७) "गौडाधिपम् अपहाय का तादृशं महापुरुष तत्क्षण एव (१८८) निर्व्याजभुजवीर्यनिर्जित-समस्तराजकं मुक्तशस्त्रं कलशयोनिमिव कृष्णवर्त्मप्रसूतिः ईदृशेन (१८९) सर्वलोकविगर्हितेन मृत्युना शमयेत् चार्यम्।

युद्धयात्राकाले नीराजना क्रियते इति व्यवहारः, विजिगीषो यात्राकाले तद्दिन यथा श्रैष्ठ्यं दृश्यते, तद्द्वैषण इत्यर्थः, परा—महतीं, भीषणतां—भयङ्करताम्। इह बहूनामुत्प्रेक्षितानाम् एकस्मिन् वस्तुनि सम्बन्धवत्त्वात् यथायथ जातिद्रव्यगुणरूपोत्प्रेक्षा, खेदसलिलशीकरासारेण दुर्दिनासम्बन्धेऽपि तत्सम्बन्धवर्णनात् अतिशयोक्तिः, अत्र भैरवाकारादिशिष्टपदार्थयोगात् श्लेषः इति, क्रोधोद्गाद्य अयजविषयकानुरागाद्-भूता इति रसाभासः, एतेषां पारस्परिकाश्रयाश्रयिलेन स्थितत्वात् सङ्करः, बहुरवान्तुरीयसौन्दर्यवत् चमत्कृत्यातिशय्यवीतक इति सङ्क्षेपः।

(१८७) गौडाधिप—शशाङ्कनामधेयम्, अपहाय—परित्यज्य, त विना इत्यर्थः। तत्क्षण एव—तदानीमेव, दृष्टिपातक्षणे एव इत्यर्थः, आयास विनेवेति भावः।

(१८८) निर्व्याजेति।—निर्व्याजेन—अकपटेन, कूटव्यवहारविमुखेन इति भावः, भुजवीर्येण—बाहुबलेन निर्जित—पराभूत समस्तं—सकल, राजकं—राजन्यवर्गः, एकत्र,—मालवादिप्रतिपक्षराजा, अन्यत्र,—दुर्धिष्ठिरादिपाण्डवा येन तथाभूत, मुक्तशस्त्रं—त्यक्तायुध निरस्त्रमित्यर्थ युद्धापगमात् पुत्रशोकाच्च इति भाव कलशयोनिमिव—कुम्भयोनिमिव द्रोणाचार्यमिव इत्यर्थः ("कुम्भयोनिरगस्त्ये स्याद्वसिष्ठ द्रोणयो पुमान्" इति मेदिनी) कृष्णवर्त्मप्रभूतिः,—कृष्णस्य—कृष्णवर्णपापस्य, अन्याय्यस्य इत्यर्थ, वर्त्म—मार्ग दुराचार इत्यर्थ, तस्य प्रभूतिः—योनि, उत्पत्तिहेतु-रित्यर्थ, ["स्त्रियां क्तिन्" (३।३।९४ पा०) इति क्तिन्] अन्यत्र—कृष्णवर्त्मा—अग्नि, ("कृष्णवर्त्मा पुमानग्नौ दुराचारे विधुन्तुदे" इति मेदिनी) प्रसूति—योनि यस्य स, यज्ञाग्निसमुद्भूत धृष्टद्युम्न इत्यर्थ, कुतश्चित् कारणात् द्रोणाचार्येणाव मानितेन द्रुपदेनानुष्ठितस्य यज्ञस्य फलभूततया द्रोणघातक इमकुण्डाग्ने उत्थित असौ इत्यामनन्ति पौराणिका।

(१८९) सर्वलोकविगर्हितेन—सर्वजननिन्दितेन, विश्वासघातपूर्वकमुपाय हननादिति भाव, मृत्युना—मरणेन, कूटप्रयोगजनितेन इति भाव, शमयेत्?—निर्वापयेत्? लोकान्तरं नयेत्? इत्यर्थ, नीचाश्रय विश्वासघातार गौडाधिपं विना इह भुवि पापकारी कोऽपि नास्ति इति समुदितार्थ। अत्र मुद्रावलत्वं विशदीकृत

(१९०) अनार्य्यञ्च तं मुक्ता भागीरथीफेनपटलपाण्डुराः केषां (१९१) मनःसु सरःसु राजहंसा इव परशुरामपराक्रमस्मृति-कृतो न कुर्य्युः आर्य्यशौर्य्यगुणाः पक्षपातम्? (१९२) कथमिव

---

पुराणमतमुपन्यस्यते, तथा हि—पुरा द्रोणेन निर्ज्जितः पाञ्चालाधिपतिर्द्रुपदः तत्कृतावमाननाप्रतिक्रियार्थं द्रोणनाशनं यागमन्वतिष्ठत्, सम्पूर्णे च यज्ञे यज्ञकुण्डात् सखड्ग पुरुष एका कन्या चैवापरा उदतिष्ठताम्, स च पुमान् धृष्टद्युम्न कन्या च द्रौपदीति नाम्ना विख्यातौ बभूताम्। ततश्च प्रवृत्ते कुरुक्षेत्रसमरे सेनापतिना द्रोणा-चार्य्येण महता रयेण पाण्डवसैन्य हन्यमानं दृष्टा कृष्णेन प्रेरितो युधिष्ठिर अनिच्छ-न्नपि "अश्वत्थामा हत" इति उच्चै "इति गज" इति च अनुच्चै तमवादीत। स च "इति गज" इति वाक्यस्य मृदुस्वरेण उच्चरितत्वात् श्रोतुमशक्नुवन् सत्यवादिनो युधिष्ठिरस्य प्रथमोक्तेन वचनेन पुत्रमरणे दृढप्रत्यय द्रोणाचार्य्य शोकात् अस्त्र परि-त्यज्य रथस्योपरि विषण्ण उपविवेश। धृष्टद्युम्नश्च तदा तत्रागत्य त खड्गेन निजघान इति।

(१९०) अनार्य्यम्—असज्जनं, नीचमित्यर्थः, अतिथौ अपि पापाचरणादिति भाव, तं—गौडाधिपं शशाङ्क मुक्त्वा—विहाय, तं विना इत्यर्थः,भागीरथीति।—भागी-रथ्या,—गङ्गायाः, फेनानां—डिण्डीराणां, पटलानि—पुञ्जाः, तद्वत् पाण्डुराः,—शुभ्राः।

(१९१) परशुरामेति।—परशुरामस्य—भार्गवस्य, य पराक्रमः,—शौर्य्यं, तस्य स्मृति,—स्मरणं, तां कुर्वन्ति—जनयन्तीति तथोक्ताः, शौर्य्यविशेषेण जामदग्न्य-स्मारका इत्यर्थः, आर्य्येति।— आर्य्यस्य—ज्येष्ठस्य, शौर्य्याणि—पराक्रमा एव, गुणाः,—उत्कर्षाः, मनःसु—चित्तेषु, निर्म्मलाशयत्वात् इति भाव, सरःसु—जलाशयेषु, राजहंसक्रीडास्पदेषु च मानसाख्येषु इति भाव, राजहंसा इव "भागीरथी—" इत्यादि "परशुराम—" इत्यादि च विशेषणद्वयं राजहंसेऽपि योजनीयम्, पुरा भगवत शङ्करात् धनुर्विद्यामधीयानेन परशुरामेण किल कैलासैकदेशे क्रौञ्च शिखरिणि स्कन्दस्य स्पर्द्धया अतिनिशितविशिखमुखेन सत्पिण्डभेदं भित्त्वा हंसमार्गः कृत इति श्रूयते, अत हंसानां तत्पराक्रमस्मृतिकृत्त्वमुक्तमित्यवधेयम्,, पक्षपातम्—अनुरागं, पक्षे,—पतत्रे, पात,—पतनम्, उड्डीय क्रौञ्चरन्ध्रपथेन मानसे सरसि गमनमित्यर्थश्च।

(१९२) कथमिव—केन प्रकारेण इव, ["किमश्च" (५।३।२५ पा०) इति थमु-

अत्युग्रस्य अस्य आर्य्यजीवितहरणे निदाघरवेरिव (१८३) कमलाकरसलिलशोषणेऽनपेक्षितप्रीतय: प्रसृता: करा: ? क्व नु (१८४) गतिं गमिष्यति ? कां वा योनिं प्रवेक्ष्यति ? कस्मिन् वा नरके निपतिष्यति ? श्वपाकोऽपि क इदम् आचरेत् ? नामापि गृह्णतोऽस्य पापकारिणः पापमलेन लिप्यत इव मे जिह्वा। (१८५) किं वा अङ्गीकृत्य कार्य्यम् आर्य्यः तेन क्षुद्रेण अनुप्रविश्य विगतघृणेन घुणेन इव (१८६) सकलभुवनाह्लादनचतुरः चन्दनस्तम्भः क्षयम् उपनीतः ?

---

प्रसृता: ] अत्युग्रस्य—अतिदारुणस्य, अतिप्रखरस्य च, अस्य—शशाङ्कस्य, आर्य्येति।—आर्य्यस्य—पूर्व्वस्य, जीवित—जीवन, तस्य हरणे—शोषणे, हननमित्यर्थं तस्मिन् निदाघरवेरिव—दीप्तसूर्य्यस्येव।

(१८३) कमलाकरसलिलशोषणे—पद्मशोभितसरोवरजलशुष्कीकरणे, अनपेक्षितप्रीतय:—न अपेक्षिता—नानुरुद्धा, प्रीति:—स्नेह:, एकत्र,—शौर्य्यस्य प्रियदर्शनत्वादिगुणसहयोगसमलङ्कृतत्वात्, अन्यत्र—सौरभादिगुणसमलङ्कृताया: स्वप्रियाया: पद्मिन्या: आश्रयभूतत्वात् इति भाव: यै: तथाभूता:, करा:,—हस्ता: किरणाश्च, प्रसृता:,—प्रवृत्ता: ; एतेन निदाघरविसाम्येन गौडाधिपते: शशाङ्कस्य औग्र्यशालित्वं स्वकार्य्यसाधने निर्ममत्वञ्च ध्वन्यते।

(१८४) गतिं—दशामित्यर्थ:। कां वा योनिं प्रवेक्ष्यति—जन्तुदेहमाश्रित्य कीदृशीं योनिमाश्रयिष्यति इत्यर्थं। "गमिष्यति" इत्यादौ "निपतिष्यति" इत्यन्तवाक्यत्रये स इति कर्त्तृपदमूहनीयम्। श्वपाक:,—चाण्डाल:। पापमलेन—पापं—निन्दितं कर्म्म एव, मलं—पङ्कम्, मालिन्यजनकं वा तेन, जिह्वया पापकारिणो नामोच्चारणात् तत्सम्पर्केण तस्या मललिप्तत्वम्, "कथाऽपि खलु पापानामलमश्रेयसे यत" इत्यादावाप्तानुमोदितानुशासनदर्शनात् इत्याशय:।

(१८५) किं वा कार्य्यम् अङ्गीकृत्य—आश्रित्य कस्य कार्य्यस्य व्यपदेशेन इति भाव:। क्षुद्रेण—नीचेन, क्रूरेणेत्यर्थ:, अधुना च तेन—गौडाधिपेन शशाङ्केन, अनुप्रविश्य—अभ्यन्तरं प्रविश्य, विश्वास्य इति भाव:, अन्तरं गत्वा च। विगतघृणेन—निर्दयेन, घुणेन इव—घुणाख्यकाष्ठकर्त्तककीटविशेषेण इव।

(१८६) सकलेति।—सकलानां—समग्राणां, भुवनानां—जगताम्, आह्लादने

(१९७) नूनं न अनेन मूढेन मधुरसास्वादलुब्धेन मधु इव आर्य्यजीवितम् आकर्षता भावी दृष्टः शिलीमुखसम्पातोपद्रवः। (१९८) निजगृहदूषणं जालमार्गप्रदीपकेन कज्जलमिव अतिमलिनं केवलम् अयशः सञ्चितं गौडाधमेन। न तु (१९९) आशु एव अस्तम् उपगतवत्यपि त्रिभुवनचूडामणौ सवितरि (२००) वेधसा आदिष्टः सत्पथशत्रोः अन्धकारस्य निग्रहाय ग्रह-

—शोभने, एकत्र,—दयादाक्षिण्यपरोपकारित्वादिगुणेन, अन्यत्र,—शैत्यसुगन्धित्वदर्शनीयत्वादिगुणेन इत्यर्थः, चतुरः,—प्रवणः, चन्दनस्तम्भः,—चन्दनतरुनिर्मिता गृहावलम्बनभूता स्थूणा इत्यर्थः, क्षयम् उपनीतः,—नाशं गमितः न जाने, किं कार्य्यमुद्दिश्य निरस्तः विश्वस्तः आर्य्यः तेन पापेन शशाङ्केन इयत् घातितः, अहो। नैष्ठुर्य्यमिति समुदितार्थः।

(१९७) नूनं—निश्चितम् उत्प्रेक्षे वा। मध्विति।—मधुनः—पुष्परसस्य, रसः,—माधुर्य्यमित्यर्थः, तस्य आस्वादे—स्वादग्रहणकर्म्मणि लुब्धः,—लोलुपः तेन आकर्षता—चालयता, विनाशयता सङ्ग्रहता च इत्यर्थः। भावी—भविष्यन्, कियदनन्तरमेवात्मन उपरि प्रपतिष्यन् इत्यर्थः, शिलीमुखेति।—शिलीमुखानां—बाणानाम्, अलीनाञ्च, भ्रमराणाञ्च इत्यर्थः, ("अलिबाणौ शिलीमुखौ" इत्यमरः) सम्पातः,—सम्पतनमेव, उपद्रवः,—अत्याचारः, दृष्टः,—अवलोकितः, तर्कित इति यावत्, स्वार्थलोलुपतया मूढाशयानां न भविष्यदत्याहितज्ञानं भवतीति निष्कर्षः।

(१९८) निजगृहदूषणं—स्वगृहध्वंसहेतु इत्यर्थः मत्कोपेन तस्य राजधान्याः अचिरादेव विनङ्क्ष्यमाणत्वादिति भावः, स्वगृहस्य शोभानाशनमित्यर्थश्च जालमार्गप्रदीपकेन—जालस्य—दम्भस्य, कपटताया इत्यर्थः, ("जालं दम्भगवाक्षयोः। क्षारकानायदम्भेषु—" इति रभसः) मार्गे—पन्थाने व्यवहारमिति यावत्, प्रदीपयति—प्रकाशयति यः तेन कूटकर्म्मप्रवर्त्तकेन गवाक्षमार्गस्थितेन दीपेन इत्यर्थश्च। केवलम् अयशः,—अकीर्त्तिमात्रं, न तु कृतस्य कर्म्मणः किमपि इष्टं फलमिति भावः, तस्य अचिरादेव मया यमसदनप्रापणादिति हृदयम्।

(१९९) त्रिभुवनचूडामणौ—त्रिलोकीशिरोरत्ने, एकत्र—जगत्प्रकाशकत्वात्, अन्यत्र—शौर्य्यदाक्षिण्यादिगुणोत्कर्षादिति भावः, सवितरि—सूर्य्ये, तत्सदृशे तेजस्विनि राज्यवर्द्धने च इति भावः, आशु—शीघ्रम्, अल्पकालमेवेत्यर्थः, अस्तम्—अदर्शनम्, नाशञ्च, उपगतवति प्राप्तवति।

(२००) वेधसा—विधात्रा, सत्पथशत्रोः,—सन्—शोभनः विद्यमानो वा,

मत्तमातङ्गकुम्भस्थलस्थिरशिरोभागभिदुरः खरतरः केसरिनखरः। तादृशाः (२०२) कुवैकटिका इव तेजस्विरत्नविनाशकाः कस्य न वध्याः ? क इदानीं यास्यति दुर्बुद्धिः ?"।

(२०३) इत्येतत् अभिदधत एव अस्य पितुरपि मित्रं, सेनापतिः, समग्रविग्रहप्राग्रहरः, (२०४) हरितालशैलावदातदेहः,

—दुष्टगजस्य, क्रूरशशाङ्कस्येति च प्रस्तुत, विनयाय—दण्डनाय, शासनायेत्यर्थः। सकलेति।—सकलानां—सर्वेषां, मत्तानां—मदोत्कटानां, मातङ्गानां—हस्तिनां, कुम्भस्थलमेव—शिरस्थोभयवोन्नतमांसपिण्डभाग एव, स्थिरः,—कठिनः, दुर्भेद्य इति भावः यः शिरोभागः,—मूर्द्धदेशः, यद्वा,—मत्तमातङ्गानां यत् कुम्भस्थलं, तथाभूतः यः स्थिरः शिरोभागः, तस्य भिदुरः,—विदारणे स्वयं विपाटनपटुः इति वा अर्थः, "[ विदिभिदि—" ( ३।२।१६२ पा० ) इत्यादिना कर्त्तरि कुरच, मुख्यकर्त्तर्य्यपि स्वीकृत इति, तथा हि काशिका,—"विदादिभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु कुरच् प्रत्ययो भवति, विदुरः पण्डितः, भिदुरं काष्ठं, छिदुरा रज्जुः। भिदिच्छिदोः कर्म्मकर्त्तरि प्रयोगः" इति] खरतरः,—अतितीक्ष्णः, केसरिनखरः,—सिंहनखः, केशरिनखरतुल्यः इत्थं इति च प्रस्तुतम्। अत्र हि अप्रस्तुतेन प्रस्तुतस्य प्रतीतेः पूर्ववदप्रस्तुतप्रशंसाऽलङ्कारः।

(२०२) कुवैकटिका इव—कुत्सिता वैकटिकाः—प्रकृतिवैकृत्यकारिणः इव, "कुत्सिताः स्वर्णकारा इव" इति केचित्, "वैकटिको रत्नबन्धकः" इत्यपरे, तेजस्विरत्नविनाशकाः,—तेजस्विनां—प्रभावतां, दीप्तिमतां चेत्यर्थः, रत्नानाम्—उत्कृष्टवस्तूनां, ("जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते" इति कोषः) विनाशकाः—विध्वंसकारिण इत्यर्थः, कस्य न वध्याः ?—मारणीयाः ? सर्व्वस्यैव वध्या इति भावः, सद्रत्ननाशकाः गुणानामपरीक्षकाः मूढा इव कपटपरिचायितमहातेजसः नीचाः कथमपि न मर्षणीया इत्याशयः।

(२०३) "इत्येतत्" इत्यस्य "सेनापतिः ...सिंहनादनामा ... समरसमानयन विज्ञापितवान्" इति अग्रेण सम्बन्धः। अभिदधतः,—कथयतः, विलपतः इत्यर्थः। सेनापतिं विशिनष्टि, समग्रेति।—समग्राणां—सकलानां, विग्रहाणां—युद्धानां, तथाविधेषु युद्धेषु वा, प्राग्रहरः,—श्रेष्ठः, सेनानीतया समराग्रयायी इत्यर्थः।

(२०४) हरीति।—हरितालस्य—स्वनामख्यातोपरसविशेषस्य, शैलः—पर्व्वतः, तद्वत् अवदातः,—गौरः, देहः,—शरीरं यस्य तथाभूतः, कमनीयसुगौरकान्तिः

परिणतप्रगुणसालप्रकाण्डप्रकाशः प्रांशुः, अतिशौर्य्योष्मणा इव परिपाकम् आगतः, गतभूयिष्ठे वयसि वर्त्तमानः, (२०५) बहुशरशयनसुप्तोत्थितोऽपि हसन्निव शान्तनवम् अति-दीर्घेण आयुषा, (२०६) दुरभिभवशरीरतया जरयाऽपि भीत-भीतया इव प्रकटितप्रकम्पया परामृष्टः, कथमपि (२०७) सार-मयेषु शिरोरुहेषु शशिकरनिकरसितसरलशिरोरुहसटालां

---

रित्यर्थः। परिणतेति।—परिणतः—महान्, प्रगुणः,—शोभनः, सालप्रकाण्डः—सालवृक्षस्कन्ध इव, प्रकाशते—दीप्यते इति तथोक्तः, प्रांशुः,—उन्नतः, शालवृक्ष इव समुन्नतशरीर इत्यर्थः। अतिशौर्य्योष्मणेव—अतिशौर्य्येण—पराक्रमातिशय्येन, य ऊष्मा—बलं सारश्च उत्तापः तेन इव, परिपाकं—परिणतिं, प्राचीनत्वमित्यर्थः आगतः,—प्राप्तः, वृद्धत्वङ्गतः इति भावः। गतभूयिष्ठे—अतीताधिकांशे, अल्पावशिष्टे इत्यर्थः, वयसि—जीवनकाले इत्यर्थः, अतिवार्द्धके इति यावत्।

(२०५) बह्विति।—बहवः—अनेके शराः—बाणाः, शत्रुप्रहिताः इति भावः, तैः शयनं—शराघातेन भूमौ पतनमिति भावः, तेन सुप्तः—पूर्वं मोहं गतः इति यावत्, पश्चात् उत्थितः,—तत्प्रहारवेदनाम् अपनीय पुनर्युद्धाय समुद्यतः इत्यर्थः, अन्यच—बहवः,—प्रचुराः, शराः,—इषवः एव शयनं—शय्या, तत्र सुप्तः—निद्रितः, उत्थितः,—प्रबुद्धः तम्, इति विभक्तिविपरिणामश्च योजनीयः शान्तनवं—भीष्मं हसन्निव—परिहासास्पदं कुर्व्वन्निव, भीष्मस्तु शरशयने स्थित एव निधनं गतः, अयन्तु तस्मात् उत्थितः पुनः सङ्ग्रामाय अवतरत् इति हासकारणमिति भावः। इहोपमेयस्य उपमानादाधिक्योपवर्णनात् व्यतिरेकसङ्कीर्णोत्प्रेक्षाऽलङ्कारः इति ज्ञेयम्।

(२०६) दुरभिभवशरीरतया—दुर्जयदेहतया जरयाऽपि—विस्रसयाऽपि, वलिपलितादिना कायशैथिल्यापादकावस्थाभेदेनापीत्यर्थः वार्द्धकेनापीति भावः, भीतभीतया—अतिभीतयेत्यर्थः अत एव प्रकटितप्रकम्पया—प्रकटितः—आविष्कृतः, प्रकम्पः—वेपथुः यया तथोक्तया, भीतत्वात् कम्पितदेहया इत्यर्थः, वार्द्धकसञ्जातकम्पमानदेहतया इति भावः, परामृष्टः,—स्पृष्टः, लग्नः कम्पितकायत्वोपवर्णनात् अतिवार्द्धके स्थितः इत्यर्थः।

(२०७) सारमयेषु—दृढेषु केशपतनाभावात् इति भावः, शिरोरुहेषु—केशेषु शशीति।—शशिनः—चन्द्रस्य, करनिकराः—किरणचयाः, तद्वत् सिताः—शुक्लाः काशस्तबकनीकाशा इत्यर्थः, सरला—अकुटिला, शिरोरुहसटा—

सैंहीमिव (२०८) निष्कपटपराक्रमरसरचिता सङ्क्रान्तां जीवनेनेव जातिम्, (२०९) अपरस्वामिमुखदर्शनमहापातकपरिजिहीर्षया इव भ्रूयुगलेन (२१०) वलितशिथिलप्रलम्बचर्मणा स्थगितदृष्टिः, (२११) धवलस्थूलगुञ्जापिञ्छप्रच्छादितकपोलभागभास्वरेण वमन् इव विक्रमकालम् अकालेऽपि (२१२) विकाशिकाशकाननविशदं शरदारम्भं भौमेन मुखेन,

---

शिरःस्रजः विद्यतेऽस्या इति तथोक्ता, सैंहीमिव— सिंहस्य इयं सैंही ताम् इव, सिंहसम्बन्धिनीमित्यर्थः।

(२०८) निष्कपटेति।—निष्कपट —कापट्यरहितः, यथार्थ इति भावः, यः पराक्रमः,—शौर्य्यं तस्मिन् रसेन—अनुरागेण, रचिता—निर्म्मिता ताम्, जातिम्—सिंहत्वामित्यर्थः जीवनेनेव—प्राणेन एव इत्यर्थः सङ्क्रान्ताम्,—अधिगताम्। केशरोपमकेशकलापेन सिंहविक्रमतया च साक्षात् सिंह इव विराजमानम् इत्युत्प्रेक्षा।

(२०९) अपरेति।—अपरः —अन्यः प्रभाकरवर्द्धनव्यतिरिक्त इति भावः, स्वामी—प्रभुः तस्य मुखदर्शनम्—मुखावलोकनमेव, महत्—घोरम्, पातकम्—पापम्, तस्य परिजिहीर्षयेव—तत्परिहर्त्तुमिच्छयेव इत्यर्थः।

(२१०) वलितेति।—वलितम्—वलियुक्तम् आकुञ्चितमिति भावः शिथिलम्—श्लथीभवत् प्रलम्बम्—लम्बमानम्, चर्म्म—त्वक् यस्य तथाभूतेन। स्थगितदृष्टिः,—आवृतनेत्रः अतीव प्रभुभक्तः लोलचर्म्मा च इति भावः।

(२११) धवलेति।—धवला—शुभ्रा स्थूला—पीवरा, घना दीर्घा चेत्यर्थः वा गुञ्जा—उत्तरोष्ठस्योपरि रोमराजिः "गोँफ" इति वङ्गभाषया प्रसिद्धा इति भावः तस्याः पिञ्छम्—पङ्क्तिः परम्परा वा तेन प्रच्छादितः —आवृतः यः कपोलभागः,—गण्डदेशः, तेन भास्वरेण—प्रदीप्तेन मुखेनेत्यनेनान्वयः। वमन्निव—उद्गिरन्निव। विक्रमकालम् —पराक्रमप्रदर्शनोचितसमयम्, शरदारम्भमित्यस्य विशेषणम्, तत्र विजिगीषुभिः युद्धयात्रा क्रियते इति शास्त्रात्। अकालेऽपि—असमयेऽपि, शरदारम्भस्य ज्ञातः शेषः, शरदतिरिक्ते ग्रीष्मादिऋतौ अपि इति भावः।

(२१२) विकाशीति।—विकाशिना—विकस्वरेण, काशकाननेन—पीटगलाख्यतृणविशेषवनेन, काशानां भूयस्तया शरदि कुसुमानि विकसन्ति, विशदम्—धवलम्, शरदारम्भम्—शरत्कालागमम्। भौमेन—भीषणेन, [ विभेत्यस्मात् इति

श्रुतमपि (२१३) हृदयस्थितं स्वामिनम् इव सितचामरेण वीजयन् नाभिलम्बिना कूर्चकलापेन, परिणामेऽपि धौतासिधारा-जलपानतृषितैः इव विवृतवदनैः वहद्भिः व्रणविदरैः विषमित-विशालवक्षाः, (२१४) निशितशस्त्रटङ्ककोटिकुट्टितबहुदीर्घव्रणा-क्षरपङ्क्तिनिरन्तरतया च (२१५) सकलसमरविजयपर्व्वगण-

ग्रुपच्या "भीत्रार्थानां भयहेतुः" (१।४।२५ पा०) इति भिय अपादाने मक्] काश-कुसुमशुभ्रगुम्फाशोभितवदनेन शरद्विलासं जनयन्नित्यर्थः ।

(२१३) हृदयस्थितम्—अन्तर्वर्त्तिनं, गुणावलिनिर्जितहृदयत्वादिति भावः, स्वामिनं—प्रभाकरवर्द्धनमिति यावत्, सितचामरेण—श्वेतबालव्यजनेन, सितच्छत्र-चामरादीनां सम्राडुचितोपकरणत्वादिति भावः । नाभिलम्बेन—नाभिदेशपर्यन्त-विलम्बिना, कूर्चकलापेन—श्मश्रुनिचयेन, ("कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे" इति मेदिनी)। परिणामेऽपि—वार्द्धकेऽपि, धौतेति।—धौता—विशोधिता, शाणिता इति भावः, असिधारा—खड्गस्य निशितमुखम् एव, जलं—सलिलं, तस्य पानाय तृषिताः,—पिपासाऽऽकुलाः तैरिव, विवृतवदनैः,—व्यात्तमुखैः, व्रणविदरैः,—क्षत-जनमव्रणस्फोटैः, ("विदरः स्फुटनं भिदा" इत्यमरः) विषमितम्—उन्नतानत, बन्धुरमित्यर्थः, विशालं—विपुलं, वक्षः,—उरःस्थलं यस्य तथाभूतः । स्नानाभि-षेकाम्बुशेषस्नानेन सुशोभितकायस्य सेनापतेः विशाले वक्षसि प्राक् पतन्निशित-खड्गधाराचिह्नशतैः एवमनुमीयते यत् सङ्ग्रामे सुबहुभिः व्रणैः उरःक्षतैः पिपासितैः इव जलपानार्थं विवृतमुखैः अद्यापि स्थीयते इति समुदितार्थः, असौ सङ्ग्रामस्थलविजयी आसीत्, तथा स्नानाभिषेकेऽनपि वार्द्धकेऽपि अनिर्वापितरणोत्साहश्च भवति इति भावः । इह धौतासिधारायाः जलस्यैव केवलं रूपणात् निरङ्गरूपकम् इत्यल-ङ्कारान्तरोत्थलेन उत्प्रेक्षायाः चमत्कृत्यतिशयः प्रतिपादित इति सङ्क्षेपः ।

(२१४) निशितेति।—निशितानि—तीक्ष्णानि, शस्त्राण्येव—आयुधान्येव, टङ्काः,—पाषाणदारणास्त्रविशेषाः, तेषां कोटिभिः,—कोणैः, अग्रैः इत्यर्थः ("कोणस्तु स्त्रियः पाल्यश्रिकोटयः" इत्यमरः) कुट्टितानि—दलितानि, बहूनि—अनेकानि, दीर्घानि—आयतानि इत्यर्थः, व्रणानि एव—क्षतानि एव, अक्षरपङ्क्तयः,—वर्णावलयः, तासां निरन्तरतया—व्याप्ततया इत्यर्थः ।

(२१५) सकलेति।—सकलेषु—सर्वेषु, समरेषु—सङ्ग्रामेषु, विजया एव—जयलाभा एव, पर्व्वाणि—क्षणाः, उत्सवा इत्यर्थः, ("तिथिभेदे क्षणे पर्व्व"

नाम् इव कुर्व्वन्, पूर्व्वपर्व्वत इव पादचारी, (२१६) विविध-वीररसवृत्तान्तरामणीयकेन महाभारतमपि लघयन् इव, (२१७) प्रतिपक्षक्षपणातिनिर्ब्बन्धेन परशुराममपि शिक्षयन् इव, (२१८) अभ्रमणेन अनादरश्रीसमाकर्षणविभ्रमेण मन्दर-

---

इत्यमर ) तेषाम्, यद्वा—सकलसमरविजयाना पर्व्वभि,—ग्रन्थिभि अङ्गुलि ग्रन्थिभिरिव व्रणग्रन्थिभिरिति भाव गणनामिव—सङ्ख्यानमिव, बहुसमरविजयी इति भाव। पूर्व्वपर्व्वत इव—उदयगिरि इव, पादचारी—चरणसञ्चरणशील, अत्युन्नतकायत्वात् तदानीमेव उदितत्वाच्चेति भाव, पूर्व्वपर्व्वतोऽपि बहुभि पादै,—प्रत्यन्तपर्व्वते, चरति—भुव समाक्रम्य तिष्ठत इत्यर्थ, ("पादा प्रत्यन्तपर्व्वता" इत्यमर)।

(२१६) विविधेति।—विविधाना—बहुप्रकाराणा, वीररसानाम—उत्साह-स्थायिभावानाम् उत्तमप्रकृतिकसमास्वाद्यमानवस्तुविशेषाणां, प्रकारभेदेन बहु-भेदाख्यापनाभीप्सितया अत्र रसबहुत्वोक्ति न दोषाय इत्यवधातव्यम्; यद्वा—विविधेन —नानाप्रकारेण वीररसस्य, पक्षे,—विविधा —अनेके वीरा,—भीष्मद्रोणादय शूराः तेषा तथा रसस्य च—युद्धानुरागस्य च, वृत्तान्तेन—प्रक्रियया, अनुष्ठानेनेत्यर्थ, प्रस्तावेन च, विवरणेन च इत्यर्थ, ("वृत्तान्त प्रक्रियाया स्यात् कार्त्स्न्यवार्त्ताप्रभेदयो। प्रस्तावे •॥" इति मेदिनी) रामणीयकं—रमणीयत्व तेन कारणेन। लघयन्निव—लघूकुर्वन्निव महाभारतवर्णितवीररसादपि अधिकवीरकर्म्मानुष्ठायीति भाव।

(२१७) प्रतिपक्षेति।—प्रतिपक्षाणा—शत्रूणा, क्षपणे—संहारे, अतिनिर्ब्बन्धेन —अत्याग्रहेण, परशुराम—परशुधारी राम त भार्गवमित्यर्थ ["शाकपार्थिवानां सिद्धये उत्तरपदलोपस्योपसङ्ख्यानम्" (वा०) इति समास ] शिक्षयन—उपदिशन, परशुरामस्यापि शत्रुनिर्य्यातनात्याग्रहविषये आचार्य्यकर्म्म कुर्व्वन इत्यर्थ, अत्रायमाशय,—तथा हि, भो भृगुनन्दन। त्वमेकविंशतिवार क्षत्रियान हत्वाऽपि तान् निःशेषान् कर्त्तुं नाशक्नो, तेन हि तव तत्रैव रणकर्म्मणि अनभिज्ञता प्रतिभाति, अह यथा समूलघातं शत्रून् विनाशयामि, तत दृष्ट्वा अद्यत्त शत्रूणा समूलोन्मूलनकौशल शिक्षयतु भवान् इति वदन् इवेति।

(२१८) अभ्रमणेनेति—अभ्रमणम—अद्रि असु वा भ्रमण, समुद्राच्चा इत्यर्थ, युद्धार्थ साङ्ग्रामिकपोतमारुह्य द्वीपान्तरस्थशासनाय इति भाव, जलदस्युकृतकठोरोत्पात-प्रशमनाय वा इत्याशय, जल पुन पुन आवर्त्तनाद्व तत, अनादरेति।—अनादरेण—

मपि मन्थयन् इव, (२१९) वाहिनीनायकमर्यादाऽनुवर्त्तनेन अम्भोधिमपि अभिभवन् इव, (२२०) स्थैर्य्यकार्कश्योन्नतिभिः अचलानपि क्षेपयन् इव, (२२१) सहजप्रचण्डतेजःप्रसरपरिस्फुरणेन सवितारमपि तृणीकुर्व्वन्निव,

अवहेलेन, यत श्रीसमाकर्षणं—श्रियाः,—राजलक्ष्म्याः, कमलायाश्च, समाकर्षणं—बलादायत्तीकरणं, समुद्रस्य च, शत्रुश्च समुद्राश्च इति भावः, तेन 'विलसितं',—विलसितं यत्र तेन, मन्दरं—मन्दरगिरिं समुद्रमन्थनदण्डभूतमिति भावः, मन्थयन्—लघयन् मन्दरगिरिं अवज्ञयैव अमुं परिभूय एका श्रियं समाजहार, असौ पुनः सकृत् तथा कृत्वा सहसा राज्ञां श्रियं समाजहार इति भावः। अत्र च श्रियौ द्रष्टासम्भवेऽपि श्रीरिव श्रीः कृता इति बिम्बप्रतिबिम्बभावबोधात् असम्भवद्वस्तुसम्बन्धरूपा निदर्शना, उपमानाधिकरणात् तस्मादपि श्रौत्कर्षप्रतीतेश्च व्यतिरेकालङ्कारश्च, इत्यनयोः साङ्कर्यम्।

(२१९) वाहिनीति।—वाहिनीनां—सेनानां, तरङ्गिणीनाञ्च, नदीनाञ्चेत्यर्थः, ("वाहिनी स्यात् तरङ्गिण्यां सेना सैन्यप्रभेदयोः" इति मेदिनी) नायकमर्यादा—पतिसम्मानना, सेनापतित्वं सरित्पतित्वञ्च इति यावत्, तस्या अनुवर्त्तनेन—अनुगमनेन अम्भोधि—सागरमपि, अभिभवन्निव—जयन्निव। नदीनां परिमिततया सेनानान्तु अपरिमिततयेति भावः, यद्वा,—नदीनां सम्यक्प्रस्थानशक्त्यभावात् सेनानां यथेप्सितं यत्र तत्र प्रस्थानशक्तिमत्त्वेन इत्याशयः। अत्र सरित्पतित्वस्याधिक्यप्रतिपादनात् पूर्ववत् व्यतिरेकालङ्कारः।

(२२०) स्थैर्य्येति।—स्थैर्य्ये—सङ्ग्रामादपरावर्त्तित्वमित्यर्थः पक्षान्तरे स्थायित्वञ्च, कार्कश्यं—काठिन्यम्, अद्रवत्वमिति भावः, उभयत्रापि समानम्, यद्वा—कार्कश्यं—सर्व्वतो निर्द्दयत्वम्, उन्नति,—उच्चत्वं ताभिः, अचलानपि—पर्व्वतानपि, क्षेपयन्निव—लज्जयन्निव। अचलादपि स्थैर्य्यादिमानासीत इति व्यतिरेकः।

(२२१) सहजेति।—सहजस्य—स्वाभाविकस्य, प्रचण्डस्य—उग्रस्य, तेजःप्रसरस्य—तेजसः—प्रभावस्य प्रसरस्य—विस्तारस्य परिस्फुरणेन—उद्योतेन, तृणीकुर्व्वन्निव—तुच्छीकुर्व्वन्निव, सवितुः तेजसः प्रसरः दिवा एव, अस्य तु रात्रिन्दिवमपि इति स्वतेजसामधिककालिकत्वेन तृणीकरणे हेतुरिति भावः, यद्वा,—तत्र दाहिका शक्तेराधिक्यमतीति, इह तु दाहिकोद्बोधिकयोरुभयोरपि समानोत्कर्षवत्त्वम् इत्यलमथ विस्तरेण।

तुला शौर्य्यशालिना, सीमान्तदृश्वा शस्त्रग्रामस्य, निर्वोढा प्रौढवादानां, (२२५) संस्तम्भयिता भग्नानां, पारगः प्रतिज्ञायाः, मर्म्मज्ञो महाविग्रहाणाम्, आघोषणापटहः समरार्थिनां, सन्निधौ एव समुपविष्टः सिंहनादनामा स्वरेण एव दुन्दुभिघोषगम्भीरेण (२२६) सुभटानां समररसम् आनयन् विज्ञापितवान्,—

"देव। (२२७) न कचित् कृताश्रयया मलिनया मलिनतराः कोकिलया काका इव कापुरुषा हतलक्ष्म्या विप्रलभ्यमानम्

---

ध्वनिं यावत्। तुला—उपमा महावीराणां सङ्ग्रामे प्रायः सर्व्वोपर्य्युचितनामा इति भावः। शस्त्रग्रामस्य—आयुधसमूहस्य सीमान्तदृश्वा—पारदृश्वा सर्व्वशस्त्रकोविद इत्यर्थः। प्रौढवादानां—प्रगल्भवचनानां शत्रुप्रयुक्तानामिति भावः निर्वोढा—निर्वाहकः समुचितप्रतिकारक इत्यर्थः।

(२२५) भग्नानां—शत्रुभयात् पलायितानां संस्तम्भयिता—आश्वासयिता। प्रतिज्ञायाः—पणस्य पारगः,—पारगामी अवन्ध्यप्रतिज्ञ इति भावः। महाविग्रहाणां—महतां सङ्ग्रामाणां मर्म्मज्ञः—सारवित् कस्मिन् केन विधिना सङ्ग्रामे कृते अवश्यमेव जयो भवेत् इत्यादिनिर्द्धारणे कुशलः परपक्षच्छिद्रोद्घाटननिपुणश्चेति भावः। आघोषणापटहः—युद्धघोषणायाः ताडनवाद्यविशेष इत्यर्थः युद्धोत्साहवर्द्धक इति भावः यथा आघोषणापटहः समरोत्साहमुद्दीपयति तथा अयमपीति भावः सन्निधौ एव—हर्षनिकट एवेत्यर्थः। दुन्दुभीति।—दुन्दुभिः—भेरी तस्य घोषः—शब्दः तद्वत् गम्भीरः,—गभीरः तेन, प्रगाढाहतभेरीघोरमन्द्रस्वरसमेन इत्यर्थः।

(२२६) सुभटानां—सुयोद्धृणां समररसं—सङ्ग्रामोत्साहम् आनयन्—जनयन् उद्दीपकवाक्यैः वर्द्धयन् इत्यर्थः।

(२२७) न कचिदिति।—न कचित्—कुत्रापि कृताश्रयया—चापल्यात् चिरं कुत्रापि अतिष्ठन्त्याऽपि कियत्कालमाश्रयन्त्या इत्यर्थः अन्यत्र—काककुलात् इतरत्र कुत्रापि अनाश्रितया इत्यर्थः मलिनया—पापया इत्यर्थः कृष्णवर्णया इत्यन्यत्र। मलिनतराः—आनन्दशून्या इत्यर्थः अतिकृष्णवर्णा इत्यन्यत्र कापुरुषाः,—नीचपुरुषाः, हतलक्ष्म्या—दुष्टया श्रिया, विप्रलभ्यमानम्—प्रतार्य्यमाणम्।

आत्मानं न चेतयन्ते । (२२८) श्रियो हि दोषान्धतादयः कामला विकाराः । (२२९) छत्रच्छायान्तरितरवयो विस्मरन्ति अन्यं तेजस्विनं जडधियः । किं वा करोतु वराकः, येन अतिभीरुतया नित्यपराङ्मुखेण न तु दृष्टानि एव

---

चेतयन्ते—अवबोधयन्ते [ ज्ञानार्थकतया चेतने णिचि अणिकर्तुः आत्मनः कर्मत्वे ज्ञेयम् ] कोकिलया प्रसवानन्तरमेव निजशावकाः काकीनीडे संस्थाप्य ताभिः पोष्यन्ते, काक्यः अपि वर्णसाम्यात् स्वशावकधिया तान् पालयन्ति अतस्तासां परैः प्रतिपालनात् परभृदिति संज्ञा समजनि । ततः जाते तु उड्डयनसामर्थ्ये शावकाः तत्समाजा-दपसृत्य स्वसमाजे सङ्गच्छन्ते इत्थं काकीनां कोकिलया विप्रलब्धत्वं लोके प्रसिद्धमेव ।

(२२८) कस्मात् तान् हतलक्ष्मीर्विप्रलभते ? इत्याह, श्रिय इति ।—श्रियः—लक्ष्म्याः दोषान्धतादयः—दोषैः—कुपुरुषानुरागादिभिः वातादिभिश्च इति व्यज्यते, अन्धतादयः—अन्धता एव आदिर्येषां ते, सदसत्कार्याणालोचनादय इति यावत्, दृष्टिहीनत्वादयश्च इति व्यज्यते कामलाः—कमलसम्बन्धिनः, कमलात् आगता वा, विकाराः—स्वस्याः कमलालयत्वात् नियतकमलवासेन आश्रयदोषात् जाताः रोगाः इत्यर्थः "कामला" इति प्रासङ्गिकः पाण्डुरोगभेदज्ञो इत्यपि व्यज्यते तस्मिन् रोगे जाते सति रुग्णस्य शङ्खादौ पीतत्वादिज्ञानेन अन्धतादयश्च दोषाः जायन्ते कमलस्य यथा दोषा—रात्रौ [ अव्ययमेतत् "दोषा रात्रौ च तन्मुखे" इति अव्ययवर्गे मेदिनी ] अन्धतादयः—सूर्यस्यास्तमनात् सङ्कोचादयः विकाराः जायन्ते, तथा लक्ष्म्याः अपि तन्निवासात् समजायन्त दोषान्धतादयः—दोषा एव अन्धतादयः—सत्पुरुषासत्पुरुषयोः विचाराक्षमत्वम् इति भावः ।

(२२९) छत्रेति ।—छत्रस्य—आतपत्रस्य छायया—आतपप्रतिपक्षभूतया अनातपेनेत्यर्थः अन्तरितः—व्यवहितः तिरस्कृतो वा छत्रान्तरितदर्शनत्वात् इति भावः, रविः—सूर्यः यैः तथोक्ताः [ "अच इः" (उ० ४ पा० १३८ सू० ) इति गत्यर्थकरुधातोः इः ] जडधियः,—मूर्खाः, लक्ष्मीमदमत्ततया इष्टानिष्टानभिज्ञाः इति भावः तेजस्विनं—प्रतापवन्तम् अन्यम्—अपरं पुरुषं विस्मरन्ति—न चिन्तयन्ति न पश्यन्तीति भावः, आत्मानमेव एकमात्रं तेजस्विनं मन्यन्ते नान्यं कमपि छत्रेण महाप्रभावतसूर्यकिरणानामपि तिरस्करणात् कोऽन्यथा कथाप्रसङ्ग इति तात्पर्यम्, एवम् अनुभूयते यथा—घनाच्छन्नदृष्टिः अर्कमपि घनाच्छन्नमिति मन्यते । वराकः—तपस्वी दुर्बलप्रकृतिः इति यावत् । येन—वराकेण, गौडश्वरेण जडाधिपत्येन । नित्यपराङ्मुखेण—

(२३०) सर्वातिशायिशौर्यातिशयश्वयथुकपिलकपोलपुलकपल्लवितकोपानलानि कुपितानां तेजस्विनां मुखानि। नासौ तपस्वी जानाति एवं, यथा (२३१) अभिचारा इव विप्रकृताः सद्यः सकलकुलप्रलयम् उपहरन्ति मनस्विनः। जलेऽपि ज्वलन्ति ताडिताः तेजस्विनः। (२३२) सकलवीरगोष्ठीबाह्यस्य तस्यैव इदम् उचितम् अनुत्तारनिरयनिपातनिपुणं

---

निवर्तविमुखेन, साहसकर्म्मणि कदाऽप्यप्रवृत्तत्वेन युद्धारम्भे एव रणक्षेत्रात् प्रदर्शितपृष्ठेन इति भावः, न तु दृष्टानि—अवलोकितानि दृष्टपारितानि इत्यर्थः।

(२३०) सर्वेति।—सर्व्वातिशायिना—सर्व्वपरिभाविना, शौर्य्यातिशयेन—पराक्रमाधिक्येन, श्वयथुः,—स्फीतिः वर्द्धनमित्यर्थः, विकाश इति यावत्, देवस्य राज्यवर्द्धनस्य महावीराणां वा इति भावः येषु तथाविधाः, कपिलाः,—आरक्ताश्च, ये कपोलाः,—गण्डदेशाः, तेषां पुलकेन—रोमहर्षेण, अप्रतिहतात्मशक्तिसमुत्कर्षस्फूर्तिसुखोदयात् इति भावः, पल्लवितः,—विस्तृतः, प्रकटीभूतो वा, कोपानलः,—क्रोधवह्निः येषु तानि। तेजस्विनां—महातेजसाम्, अस्मत्प्रभूणामिति विजिगीषुनृपाणां वा इति भावः।

(२३१) अभिचारा इव—आथर्व्वणा मारणादयो विधय इव, विप्रकृताः,—निकृताः, अपमानिता इति यावत्, ("निकृतः स्याद्विप्रकृतः" इत्यमरः) विप्रैः,—ब्राह्मणैः, कृताश्च, मनस्विनः,—प्रशस्तमनसः, महावीरा इत्यर्थः, ["अस्मायामेधास्रजो विनिः" (५।२।१२१ पा०) इति विनिप्रत्ययः] सद्यः—अचिरादेव इत्यर्थः, सकलकुलप्रलयं—सर्व्ववंशविनाशम्, उपहरन्ति—उपानयन्ति, जनयन्ति इति यावत्। जलेऽपि—सलिलेऽपि, आत्मसम्भूतेऽपीति भावः, "आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी" इति स्मरणात्, जडेऽपि च, ताडिताः,—वधुता प्रहृताश्च तेजस्विनः—अग्नयः, प्रतापवन्तश्च। अत्र मनस्विभिः तेजस्विभिश्च समं सकलकुलप्रलयजननत्व-ज्वलनत्वादिधर्म्मैः स्वस्य बिम्बप्रतिबिम्बभावनिर्देशात् दृष्टान्तालङ्कारः, 'दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिबिम्बनम्" इति दर्पणलक्षणात्।

(२३२) सकलेति।—सकलानां—कृत्स्नानां वीराणां—शूराणां, गोष्ठी—समाजः, तस्याः बाह्यः,—बहिर्भूतः, ततो निष्कासित इत्यर्थः तस्य कापुरुषतादिदोषैः वीरसमाजेषु अगण्यस्य इति भावः, गोष्ठीबाह्यत्वेन अनुपासितवृद्धत्वात् धर्म्मं न जानाति, अतस्तस्य एवम्भूतस्य निरवोचितमिदं कर्म्म युज्यते इति सङ्गतिः,

कर्म । (२३३) मनस्विना हि प्रधनप्रधानधने धनुषि ध्रियमाणे, सति च कमलाकलहंसकेलिकुवलयकानने कृपाणे, कृपणोपाया पयोधिमथनप्रभृतयोऽपि श्रीसमुत्थानस्य, किं पुनरीदृशाः ? (२३४) येषाञ्च धाता धरित्रीं त्रातुं नियुक्ताः

---

तस्य—गौडाधिपस्य अनुत्तारेति ।—नास्ति उत्तारः—उद्धारः यस्मात् तादृशः निरये—नरके निपातः—निपतनं तत्र तस्य वा निपुणं—समर्थं स्थाचितमित्यर्थः इदं—विश्वस्तहननरूपं कर्म आचितं—सदृशं "मित्रद्रोही कृतघ्नश्च ये च विश्वासघातकाः । ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥" इत्युक्तेः । उपायं कृतवतीयं महाराजराज्यवर्द्धनस्य विश्वस्तवीरसहन्तृकृतस्य गौडाधमस्यैवानुरूपम्, इति तस्य साभाजकसहाय साहसमात्र एव तथाविधानुष्ठाने हेतुः इति पूर्वपदार्थस्य हेतुभूततया निर्देशात् पदार्थहेतुकं काव्यलिङ्गम् इति ज्ञेयम् ।

(२३३) मनस्विना—वीराणां हि इहावधारणार्थे प्रधनेति ।—प्रधनस्य—युद्धस्य ("युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्" इत्यमरः) प्रधानं—श्रेष्ठं धनं—महामूल्यवदस्तु साधनमिति भावः तस्मिन् धनुषि—कार्मुके ध्रियमाणे—रक्ष्यमाणे । कमलेति ।—कमला—लक्ष्मीरेव कलहंसी—राजहंसी कमलायाः कलहंस्याश्च उभयोरेव कुवलयवनसञ्चारित्वसामान्यादारोपात् रूपकालङ्कारः, नृपश्रेष्ठमहिषी वा ("कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे" इति मेदिनी) तस्याः केलिः—क्रीडा यत्र तादृशे कुवलयकानने—नीलोत्पलवने तस्मिन् तद्भूते इत्यर्थः, निशितानां कृपाणानां नीलोज्ज्वलप्रभावत्त्वादिति भावः कृपाणे—करवाले सति च—विद्यमाने च ध्रियमाणे इत्यनुषङ्गेणान्वयो वा तेन ध्रियमाणे सतीत्यर्थः, वीराणां कृपाण एव कमला प्रापयतीति भावः श्रीसमुत्थानस्य लक्ष्मीसमाहरणस्य पयोधिमथनप्रभृतयोऽपि—मन्दरगिरिणा क्षीरसागरावलोडनादयोऽपि कृपणोपायाः—दीनचेष्टाः कापुरुषाचारा इति भावः । एतेन क्षीरसागरावलोडनचेष्टा तु दैवपौरुषमेव लक्ष्मीलाभहेतुः इति पौरुषस्य सर्वोत्कृष्टत्वप्रतिपादनात् व्यतिरेकालङ्कारः व्यज्यते । ईदृशाः—विश्वस्तहननादय इत्यर्थः किं पुनः ?—दीनोपाया इति किं वक्तव्यम् ? इत्यर्थः विश्वासहननादयः कापुरुषाचारा एवेति भावः ।

(२३४) येषां—मनस्विनां वीराणामित्यर्थः [सम्बन्धविवक्षया षष्ठी] धाता—ब्रह्मणा, धरित्रीं—पृथिवीं, त्रातुं—रक्षितुं, नियुक्ताः,—आदिष्टा इत्यर्थः गिरीणां

स्वयम् असमर्था इव (२३५) कुलिशकर्कशभुजपरिघ-प्रहरणहेतोः उद्गिरन्ति गिरयोऽपि लोहानि, ते कथमिव बाहुशालिनो मनसाऽपि विमलयशोबान्धवा ध्यायेयुः अकार्य्यम् ? (२३६) सर्व्वग्रहाभिभवभास्वराणां हि सुभटकराणाम् अग्रतो दिग्ग्रहणे पङ्गवः पतङ्गकराः।

---

गौरवसञ्चारादिति भाव, असमर्था इव—अक्षमा इव, अचलत्वादिति भाव। ["असमर्था इव" इत्यत्र "असमर्था एव" इति पाठान्तरम्]।

(२३५) गिरय—पर्वता अपि, अचेतनप्रस्तरमया अपीति भाव, कुलिशेति।—कुलिशवत—वज्रवत, कर्कश,—कठिन, भुज,—बाहु, तव यत परिघप्रहरणं—मुद्गरास्त्र तस्य हेता,—तन्निमित्त, परिघनिर्म्माणार्थमित्यर्थ, लोहानि—तदाख्यधातु-विशेषान् उद्गिरन्ति—उद्वमन्ति, प्रसूयन्ते इति यावत, बाहुशालिन,—प्रशस्तबाहव, भुजवीर्य्यसमन्विता इत्यर्थ, विमलेति।—विमलानि—शुभ्राणि, यशांसि—कीर्त्तय एव, बान्धवा,—मित्राणि येषा तथाभूता पूतयशोधना इत्यर्थं ते—येदामर्थं अचलना बाहु-विरहिता गिरयोऽपि लोहानुद्गीर्य्य धर्म्मानुसारेण पृथिवी वात सहायक कुर्व्वन्ति, तादृशा राजान इत्यथ, गिरीणां परिघप्रहरणार्थोद्गिरणासम्बन्धेऽपि इह सम्बन्ध प्रतिपादित: इत्यतिशयोक्ति असमथत्वरूपगुणोत्प्रेक्षाऽङ्गम्, कथमिव—किमर्थमित्यर्थ, मनसाऽपि—चेतसाऽपि, कि पुनर्बहिरनुष्ठानेनेति भाव, अकार्य्य—दुष्कार्य्य, ध्यायेयु ?—चिन्तयेयु ? नैव कदाऽपि चिन्तयन्ति इत्यथ, येषा किञ्चिदपि बाहुबलमस्ति, ते मनसाऽपि न एतादृश गर्हितमाचरन्तीति भाव।

(२३६) सर्वेति।—सर्व्वस्य—सकलवस्तुन, ग्रहाभिभव,—ग्रह—बलात् ग्रहणमेव, अभिभव,—तिरस्कार, वस्तुस्वामिनामिति भाव पक्ष—सर्वे ग्रहा,—चन्द्रा-दय, तेषामभिभव,—महता तेजसा विम्लानताजननरूपतिरस्कार तेन भास्व ... , भास्वरा,—उज्ज्वलाश्च, इति लिङ्गविपरिणामेन "पतङ्ग-करा" इत्यत्र योजनीयम्, सुभटकराणा—वीरबाहूनाम् अग्रत,—पुरत, पतङ्ग-करा,—सूर्य्यकिरणा, ("पतङ्गौ पक्षि सूर्य्यौ च" इत्यमर) करा —हस्ताश्च इति ध्वनि, दिग्ग्रहणे—दशो,—पूर्वपश्चिमात्मिकयो दिशो, ग्रहण—ज्ञाने, अवलम्बने वा पङ्गव,—अचला, दिगवबोधाक्षमा, दिग्ग्रहणासमया वा इत्यथ, तासा कौलीन महा-वीरसङ्घर्षोद्भवात ध्वनितम्, यदा महावीरा अस्त्राणा दृष्टिभि गगनमाच्छादयन्ति,

(২৩৭) মহামহিষশৃঙ্গতরঙ্গভঙ্গভঙ্গুরভীষণান্তরালা লোকপ্রবাদমাত্রেণ দক্ষিণাশা, পরমার্থতো ভটভ্রূকুটি অধিবাসো যমস্য। (২৩৮) চিত্রঞ্চ যত, উন্মত্তসিংহনাদানাং সহসা সাহসরসরোমাঞ্চকণ্টকনিকরেণ সহ ন নির্যান্তি ভটা শূরাণা রণেষু।

---

তদা সর্বা দিশঃ সমা এব ইতি মত্বা কা দিশমাশ্রয়াদিতি দিগ্বধূনায়ক সুভট সমাক্রামেৎ চেৎ অন্যাহিত ভবেৎ ইত্যাশঙ্কয়া বা চিন্তাকুলা সূর্য্যরশ্ময়ো ভবন্তীতি ভাব যদ্বা—বীরবাহব এব দিশা চতুণা গ্রহণে নিরায়াস সমর্থা ন তু পতঙ্গস্যেব—অগ্নিকীটবিশেষস্যেব অতিতুচ্ছত্বাৎ ভাব, পতঙ্গস্য—সূর্য্যস্য, করা—হস্তা ইতি যাবৎ তেষা পূর্বপশ্চিমযোর্দ্বয়োরেব দিশো বিশেষত গ্রহণাদিতি ভাব যদ্বা—পতঙ্গস্য—"জোনাকী পোকা" ইতি বঙ্গভাষয়া প্রসিদ্ধস্য খদ্যোতাখ্যকীটবিশেষস্য করা অকারণমপি অপহ্নব,—প্রভাবিকাশেঽপ্যপরাঙ্মুখা ভবন্তি বীরকরদর্পকৈ সর্বথা সূর্য্যাদিগ্রহাণামভিভবাৎ, এতেন বীরাণা সর্ব্ব তেজোঽভিভাবিত্ব গৌড়াধিপস্যাপি প্রকাশমানত্বঞ্চ ধ্বনিতম্। অত্র পতঙ্গকরাদপি বীরকরস্য আধিক্যপ্রতীতে ব্যতিরেকোঽলঙ্কার।

(২৩৭) মহেতি।—মহামহিষস্য—যমবাহনস্য ইত্যর্থ, যমস্য দক্ষিণ দিগধিপতিত্বাৎ ইতি ভাব শৃঙ্গয়ো—বিষাণয়ো তরঙ্গভঙ্গবৎ—ঊর্ম্মিচ্ছেদবৎ ভঙ্গুর—ভঙ্গিমৎ কুটিল বা বক্তুলপর্বতাদিমত্ত্বাদিতি ভাব, যদ্বা—শৃঙ্গাভ্যা তরঙ্গভঙ্গবৎ ভঙ্গুর দর্শিতকাঠিন্যাদিবুননাৎ ইতি ভাব ভীষণ—ভয়ানকম্ অন্তরাল—মধ্য যস্যা সা দক্ষিণাশা—দক্ষিণা দিক্ লোকপ্রবাদমাত্রেণ—জনশ্রুতিমাত্রেণ ইতি যাবৎ যমস্য—কৃতান্তস্য অধিবাস—বসতি, বাসভূমিরিত্যর্থ পরমার্থত—বস্তুত ভটভ্রূকুটি—ভটস্য—যোদ্ধৃপুরুষস্য, ভ্রূকুটি—ভ্রূভঙ্গিরিত্যর্থ যমস্য অধিবাস ইতি শেষ তত্রৈব সর্বদা প্রত্যক্ষতেন প্রতীয়মানত্বাৎ ইত্যাশয়। যমস্য বাসভূমি দক্ষিণা দিক্ ইতি বচনন্তু প্রবাদমাত্রপরতয়া অলীকমেব পরমার্থতস্তু বীরাণা সরোষভ্রূভঙ্গিরেব যমাবাসভূমি ইতি ভট ভ্রূকুটৌ যমাধিবাসস্যাসম্বন্ধেঽপি তৎসম্বন্ধকথনাদতিশয়োক্তিরলঙ্কার।

(২৩৮) চিত্রঞ্চ—আশ্চর্য্যঞ্চ। রণেষু—সংগ্রামেষু সহসা—অকস্মাদিত্যর্থ, উন্মত্তসিংহনাদানা—সিংহনাদ কুর্বতামিত্যর্থ শূরাণা—বীরাণা সাহসেতি।—সাহসরসেন—বলসম্পাদকর্ম্মসু অতিপ্রণয়িতয়া ("সাহসন্তু বলাৎকারকৃতকার্য্যে দমেঽপি চ" ইতি মেদিনী) যে রোমাঞ্চা,—রোমহর্ষা, ভীষণকর্ম্মসম্পাদনাদিত্

इयमेव च (२३९) चतुःसागरसम्भूतस्य भूतिसम्भारस्य भाजनं प्रतिपक्षदाहि दारुणं वडवामुखं वा महापुरुषहृदयं वा। (२४०) तेजस्विनः सकलान् अनवाप्य पयोराशि-सहजस्य कुतो निवृत्तिः उष्मणः? (२४१) वृथावितत-विपुलफणाभारो भुजङ्गानां भर्ता, बिभर्त्ति यो भोगेन क्ष्मापिण्ड-

---

भावः, ते एव कण्टकानि—क्षुद्रशत्रवः, सूच्यग्ररूपाणि वा, तेषां निकरः—समूहः तेन सटाः—केसराः, सिंहानामिव इति भावः, न निर्यान्ति—न निर्गच्छन्ति, वीराणां रोमहर्षणासङ्गनादेव दुर्बलप्रकृतयः शत्रवो निधनं गच्छन्ति, परन्तु सिंहानुनाना-मपि शूराणां सिंहानाम् इव केसरा यत्र न विद्यन्ते इत्येव चित्रम् इति समुदितार्थः। वीरास्तु अकेशरा केशरिण एव अतस्तदाक्रान्तानां रिपूणां कुतो जीवनाशा? इति भावः।

(२३९) चतुःसागरेति।—चतुर्णां सागराणां—समुद्राणां समाहारः चतुः-सागरम्, [ अत्र "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" (वा०) इति न प्रवर्त्तते, "पात्राद्यन्तस्य न" (वा०) इति निषेधात् न ङीप् ] तस्मात् तत्र वा, यद्वा—चत्वारः सागराः चतुःसागराः, तेभ्यः तेषु वा सम्भूतस्य—समुत्पन्नस्य भूतिसम्भारस्य—भस्मनिचयस्य, वाडवानलतेजसा तत्रत्यवस्तुजातानां दग्धीभूतत्वात् इति भावः, ऐश्वर्यादि-सम्पत्समूहस्य च, ("भूतिर्भस्मनि सम्पदि" इत्यमरः) भाजनं—स्थानम्। प्रतिपक्षाणां—विरोधिनां जलानामित्यर्थः आपत्तिपराक्रमस्य वाडवानलस्य सलिलशोषकत्वात्, शत्रूणाञ्च इत्यर्थः, दाहि—दाहकं, दारुणं—तीव्रं, वडवामुखम्—अश्वामुखं, तदुद्भूतत्वेनातिदीप्तं वडवानलं इत्यर्थः महापुरुषहृदयं—महानुभावचित्तं कुटाश्रया भोरवः न सम्पद्भाजनानि भवन्ति अत तादृशं गौडाधिपं अवश्यमं आचरादेव विनङ्क्ष्यति इत्याशयः।

(२४०) तेजस्विन इति।—पयोराशिसहजस्य—पयोराशौ—समुद्रे सहजः—सह उत्पन्नः तस्य समुद्रमन्थनस्य च गाम्भीर्यातिशयादिति भावः तेजस्विनः—वडवानलस्य वीरपुरुषस्य च उष्मणः—तेजसः प्रतापस्य च सकलान्—कृत्स्नान, शत्रून् दाह्यानिति च इत्थं अनवाप्य—प्राप्य इति यावत् कुतो निवृत्तिः?—शान्तिः? नैव कदापि निवृत्तिसम्भव इत्यर्थः।

(२४१) वृथेति।—वृथा—निष्फलं यथा तथा, विततः—विस्तृतः, विपुलः—महान्, फणाभारः—फटासमूहः यस्य तथाभूतः, भुजङ्गानां—नागानां, भर्त्ता—

मेव केवलम्। (२४२) अप्रतिहतशासनाक्रान्त्युपभोगसुखरसन्तु रसायाः (२४३) दिक्कुञ्जरकरभारभास्वरप्रकोष्ठा वीरबाहव एव जानन्ति। (२४४) रविरिव उन्मुखपद्माकरगृहीतपाद-पल्लवः सुखेन अखण्डिततेजाः दिवसान् नयति शूरः।

प्रभुः शशाङ्क इत्यर्थः पृथ्वीभारधारीति भावः। —भुजङ्गाधिपस्य भोगेन—देहेन फणमण्डलेन वा ("भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः) केवलं मस्तिष्कमेव—मस्तिकाग्निमेव शिभास्य—धत्ते केवलं मात्सर्यवहनार्थमेताट्टकः प्रयासो न तस्य उचित इत्यर्थः शशाङ्कसदृशानां मारमस्तिष्कमात्रधारिणां पृथ्व्याः धारणाय तस्य सहस्रफणावहनमस्त्रीकार एवैव अतो भारस्यास्य परित्याग एव उचित इति भावः।

(२४२) रसायाः—भुवः ("भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" इत्यमरः) अप्रतिहतेति—अप्रतिहतेन—प्रतिघातवर्जितेन अनतिक्रमणीयेन इत्यर्थः, शासनेन—आज्ञया प्रतापेनेति यावत् या आक्रान्तिः—आक्रमणं प्रभावविस्तार इत्यर्थः तया च उपभोगः—सम्भोगः तेन च सुखरसः—सुखास्वादः तम्।

(२४३) दिक्कुञ्जरेति।—दिक्कुञ्जरस्य—दिग्गजस्य करभारः—शुण्डाभोगः तद्वत् भास्वरः—दीप्यमानः प्रकोष्ठः—कूर्परमणिबन्धयोः अभ्यन्तरभागः येषां तथाभूताः ("प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी) वीरबाहवः—वीराणां—सुभटानां बाहवः—भुजा एव जानन्ति—अनुभवन्तीत्यर्थः वीरभोग्या एव वसुन्धरा न तु शशाङ्कसदृशकापुरुषनिमित्तमपि तवावनयकत्वेन रक्षणीया इति भावः।

(२४४) रविरिति।—शूरः—वीरपुरुषः रविः इव—सूर्य इव अखण्डित-तेजाः—अखण्डितम्—अप्रतिहतं तेजः—प्रतापः द्यौतिश्च यस्य तथाभूतः अत एव उन्मुखेति।—उन्मुखया—उत्सुकया तत्परतया इत्यर्थः सानुरागयेति भावः पद्मया—लक्ष्म्या करेण—हस्तेन गृहीतः—सेवितः पादपल्लवः—चरणपल्लवः अन्यत्र—उन्मुखे—ऊर्ध्वमुखे पद्माकरे—कमलसमूहे पद्मसरसि वा गृहीताः—स्वविकाशकत्वेन प्राप्ता इत्यर्थः पादपल्लवाः—किरणसञ्चयाः यस्य तथाभूतः दिवसान्—वासरान् नयति—अतिवाहयति प्रापयति च करतोऽन्यत्र, रवेः दिवसकरत्वात् अखण्डिततेजसो वीरा भवादृशा एव निर्भरं सुखेन स्यात्

(२४९) शस्त्रालोकप्रकाशिताः शून्या दिशः शौर्य्यस्य । (२५०) रिपुरुधिरशीकरासारेण भूरिव श्रीरपि अनुरज्यते । (२५१) बहुनरपतिमुकुटमणिशिलाशाणकोण-कषणेन चरणनखराजिः इव राजताऽपि उज्ज्वलीभवति ।

---

इत्यर्थः, शब्देति ।—शब्देन—शौर्य्याभिमानिन ध्वनिना इत्यर्थः, विद्रुता —पला-यिता, द्विषन्तः—शत्रवः येभ्यः तथाभूतानि तत्र भयापवार्त्तायवणमेव भीत्या पलायिष्यन्ते, अतस्तूर्णं जिगीषुर्भव अन्यथा न सम्यक् कार्य्यसिद्धिः, पलायने यथोचितप्रति-शोधदानाप्रसङ्गात् इति भावः, यद्वा,—दर्पस्य—शौर्य्योचितगर्वातिरेकस्य, द्वाराणि—प्रवेशस्थानानि, तल्लाभोपाया इत्यर्थः, शब्देति ।—शब्देन—दर्पसूचकनिनादेन, विद्रुताः,—विद्रुताः सन्तः अपसृताः द्विषन्तः—विपक्षाः येभ्यः तथाभूतानि, भवन्ति दर्पाद्रिकात् महाशौर्य्यसूचकाद्दते शत्रूणां निर्जयः कदाऽपि न सम्भवति, अतः शौर्य्यदर्प एव प्रागाश्रयणीय इति तात्पर्य्यम् ।

(२४९) शस्त्रेति ।—शस्त्राणाम्—आयुधानाम् [ शसते: "सर्व्वधातुभ्यः ष्ट्रन्" (उ० ४ पा० १५८ सू०) इति ष्ट्रनि रूपम् ] आलोकेन—उद्योतेन, प्रकाशिताः,—उद्भासिताः, शौर्य्यस्य—वीर्य्यप्रकटनस्य दिशः—ककुभः, पन्थान इति यावत्, शून्याः,—अनावृताः, जनरहिता इत्यर्थः, तदागमनवार्त्ताश्रवणेनैव पलायितप्रतिपक्षत्वादिति भावः, निशितकृपाणप्रभाभिरिव शौर्य्यरूपा दिशो ज्योतिष्कादिभिः उद्भासिता भवन्ति इति तात्पर्य्यम् ।

(२५०) रिपुरिति ।—रिपूणां—शत्रूणां, रुधिराणि—शोणितानि तेषां शीकरासारः,—बिन्दुधारासम्पातः तेन, भूरिव—रणभूमिरिवेत्यर्थः, श्रीरपि—लक्ष्मीरपि, अनुरज्यते—अनुरक्ता भवति, वशगता भवतीति भावः, अनुलिप्ता भवति इत्यर्थश्च अवश्यमेव विजयलक्ष्मीस्त्वामाश्रयिष्यतीत्याशयः, रिपूणां समूलोन्मूलन-मन्तरेण श्रीर्दुर्लभा भवति तात्पर्य्यम् । वीरानुरक्ता हि राजश्रियः भवन्ति इति उपमया ध्वन्यते ।

(२५१) बह्विति ।—बहूनाम—अनेकेषां, नरपतीनां—राज्ञां, चरणपतितानामिति भावः, मुकुटेषु—किरीटेषु,—या मणिशिलाः,—रत्नानि इत्यर्थः, ता शाणाः,—निकषशिला इव, ("शाणस्तु निकषः कषः" इत्यमरः) तासां कोणैः—अस्त्रिभिः, कषणः—घर्षणं तेन, चरणनखराजिरिव—पादनखश्रेणिरिव, राजताऽपि—राजत्वमपि, साम्राज्यमिति भावः, उज्ज्वलीभवति—उज्ज्वलतामापद्यते इत्यर्थः,

(२५२) अनवरतशस्त्राभ्यासेन करतलानि इव रिपुमुखानि श्यामीभवन्ति। (२५३) विविधव्रणबद्धपट्टकशतैः शरीरमिव यशोऽपि धवलीभवति। (२५४) कवचिषु रिपुरःकवाटेषु पात्यमानाः पावकशिखामिव श्रियमपि वमन्ति निष्ठुरा निस्त्रिंशप्रहाराः। (२५५) यत्राहितहतस्वजनो मनस्विजनो

भूषणीभवति इत्यर्थः नृपचक्रसेवितपादपद्मा हि भवन्ति सम्राज इति भावः। विजितनृपालचूडामणिमरीचिभिः विजेतुः राज्ञः यथा चरणनखराजयः राजन्ते, तथा साम्राज्यमपि इति साम्यात् उपमालङ्कृतिः।

(२५२) अनवरतेति।—अनवरतेन—सततेन, शस्त्राणाम्—आयुधानाम्, अभ्यासेन—अनुशीलनेन, सञ्चालनेन इत्यर्थः करतलानि इव—हस्ततलभागा इव रिपूणाम्—शत्रूणाम्, मुखानि—वदनानि, श्यामीभवन्ति—सञ्जातकिणानि, मलिनानि च भवन्ति इत्यर्थः, प्रबलप्रतिपक्षस्य शस्त्राभ्यासजनितपराक्रमस्मरणेन विमर्देषु जीवने अपि च नैराश्योदयादिति भावः।

(२५३) विविधेति।—विविधेषु—बहुप्रकारेषु, व्रणेषु—सङ्ग्रामव्यापारेणोत्पादितेषु क्षतचिह्नेषु इत्यर्थः, बद्धानि—व्रणसन्धानार्थं स्यूतानि, यानि पट्टकशतानि—सम्बद्धवस्त्रखण्डसमूहाः तैः। धवलीभवति—शुभ्रं भवति, उज्ज्वलीभवति च, तेषां बहुयुद्धनिदर्शनतया शौर्यातिशय्यप्रकटनपरत्वादिति भावः।

(२५४) कवचिषु—वर्माऽऽवृतेषु इति यावत् ("तनुत्रं वर्म दंशनम्। उरश्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्" इत्यमरः) रिपुरिति।—रिपूणाम्—शत्रूणाम्, उरःकवाटेषु—द्वारावरणकाष्ठफलकवत् दृढेषु मांसलेषु च वक्षःस्थलेषु, पात्यमानाः—छिद्यमानाः निष्ठुराः,—निर्दयं मर्दिताः, प्रगाढा इत्यर्थः निस्त्रिंशप्रहाराः,—असिताडनानि पावकशिखामिव—अग्निज्वालाम् इव इत्यर्थः, वमन्ति—उद्गिरन्ति, जनयन्ति च इत्यर्थः ददति इति यावत्, सानुरागां कारयन्ति इति भावः, कठोरचन्द्रहाससम्पाताः शत्रुनिपातनेन राजलक्ष्मीं स्वस्वामिनं नीताः निष्कर्षः, शत्रूणां शिलासमेषु दृढेषु वक्षःस्थलेषु जिगीषुणा निर्दयं निपातितेभ्यः करवालेभ्यः तीक्ष्णेभ्यः समुद्भूताः दीप्ततया जयश्रियः इवाभान्ति इति तात्पर्यम्, तत्र ज्वालसमप्रभायाः लक्ष्म्याः समाश्रयाधारभूतःस्वरूपत्वात् साम्यमत्राहितमिदाते बोध्यम्।

(२५५) यत्रेति।—मनस्विजनः,—वीरपुरुषः। अहितहतस्वजनः,—अहितेन—शत्रुणा, हतः,—नष्टः, स्वजनः,—बन्धुजनः यस्य तथाभूतः सन्, यत्र,—

(२५८) न च स्वप्नदृष्टनष्टेषु इव क्षणिकेषु शरीरेषु निबध्नन्ति वस्तुबुद्धिं प्रबुद्धाः। (२५९) स्थायिनि यशसि शरीरधीः वीराणाम्। (२६०) अनवरतप्रज्वलिततेजःप्रसर-भास्वरस्वभावञ्च मणिप्रदीपमिव कलुषः कज्जलमलो न स्पृशति एव तेजस्विनं शोकः। (२६१) स त्वं सत्त्ववताम् अग्रणीः, प्राग्रहरः प्राज्ञानां, प्रथमः समर्थानां, प्रष्ठोऽभि-

---

(२५८) प्रबुद्धाः,—प्रकृष्टज्ञानिनः, सौगतसिद्धान्तविदः वा, "यत्तत् सत् क्षणिकम्" इत्यादौ यत् सत्, तत् क्षणिकमिति क्षणभङ्गवादस्य तेषां सिद्धान्तेन निर्णीयमानत्वात् इति भावः, जागरिताश्च स्वप्नेति।—स्वप्नेषु—निद्रावस्थायां विषयानुभवेषु, दृष्टानि—अवलोकितानि, नष्टानि—समनन्तरम् एव अदर्शनं गतानि इत्यर्थः तेषु इव, क्षणिकेषु—क्षणमात्रस्थायिषु, कियत्समयानन्तरमेव भङ्गुरेष्वित्यर्थः, वस्तुबुद्धिम्—आत्मीयत्वज्ञानं, निबध्नन्ति—स्थापयन्ति, स्वप्नदृष्टानीवालीका न खलु भवन्ति शरीराणि, अतो ममत्वबुद्ध्या नश्वरशरीरनाशभयात् रणपराङ्मुखता नोचिता इति भावः।

(२५९) स्थायिनि—अविनश्वरे, चिरन्तने इति भावः, ["नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (३।१।१३४ पा०) इति स्थाधातोः णिनिः]। शरीरधीः,—देहबुद्धिः, वीराः यश एव शरीरमिव अव्ययत्वबुद्ध्या रक्षितं यतन्ते, न पाञ्चभौतिकं क्षणिकमिति भावः। इह भवादृशानां वीरव्रतचर्य्योपार्जितयश एव शरीराभिरक्षिरेव श्रेयस्करी इति विशेषे वक्तव्ये साधारणवीररूपसामान्यमभिहितम् इत्यप्रस्तुतप्रशंसाभेदोऽलङ्कारः।

(२६०) अनवरतेति।—अनवरतं—सततं, प्रज्वलितेन—प्रतनुपूरतयाऽपि भास्वता, तेजसा—प्रतापानां, ज्योतिषाञ्च, प्रसरेण—प्रकाशेन, भास्वरः—दीप्तिमान्, स्वभावः,—प्रकृतिः यस्य तथाभूतं, तेजस्विनं—प्रतापवन्तं प्रज्वलन्तञ्च मणिप्रदीपमिव—रत्नदीपमिव, स्वभावोज्ज्वलमिति भावः कलुषः,—कारणेन पापपरिणामभूतश्च, तमोबहुल इत्यर्थः कज्जलमलः,—कज्जलम्—अञ्जनम्, अग्निशिखोद्भूतधूमजन्यकृष्णद्रव्यम् इत्यर्थः, तदेव मलः,—मालिन्यम्, कज्जलवत् मलः—मलिन इत्यर्थश्च। न स्पृशति —नाश्रयति प्रतिकारस्पृहाया अभावात् शोकप्रतिपक्षकोपोद्रेकाच्च इति भावः, अन्यत्र,—मणिमयत्वेन धूमसम्बन्धाभावादिति भावः।

(२६१) स त्वम्—सर्वैविभवसम्पन्नो भवान् इत्यर्थः, एतेन सर्वकार्य्याणामनन्य-

जातानाम्, अग्रेसरः तेजस्विनाम्, आदिः असहिष्णूनाम्। (२६२) एताश्च सततसन्निहितधूमायमानकोपाग्नयः सुलभासि-धारातोयतृप्तयो विकटबाहुवनच्छायोपगूढा धीरतायाः निवासशिशिरभूमयः स्वायत्ताः सुभटानाम् उरःकवाटभित्तयः।

---

थासहायनत्वमस्य हर्षस्य सूचितम्। सत्त्ववतां—महाप्राणशालिनाम् अग्रणीः,—अग्रगण्यः। प्राज्ञानां—प्रकृष्टबुद्धिशालिनां, प्रागहरः,—प्रधानं, वरिष्ठ इति यावत्, ("क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः। मुख्यवर्यवरेण्याश्च प्रवर्होऽनवरार्ध्यवत्। पराद्ध्याग्र्यप्राग्रहर॰ ॥" इत्यमरः)। समर्थानां—शक्तिमतां, प्रथमः,—आद्यः। अभिजातानां—महाकुलीनानां पृष्ठः—श्रेष्ठः, ("पृष्ठास्त्वष्टमे श्रेष्ठे" इति मेदिनी)। तेजस्विनां—प्रतापवताम्, अग्रेसरः—मुख्यः, ["तत्पुरुषे कृति बहुलम्" (६।३।१४ पा॰) इति सप्तम्या अलुक्]। असहिष्णूनाम्—अहितविक्रमासहनशीलानामिति यावत् आदिः,—प्रथमः मुख्य इत्यर्थः, एतादृशस्य सत्त्वगुणवतश्च ते विपद्दमने न कालातिक्रमः करणीय इत्याशयः।

(२६२) एताश्चेति।—एताः,—परिदृश्यमानाः, त्वत्कार्यार्थमवरुद्धा इति यावत्, सततेति।—सततसन्निहिताः,—निरन्तरसमीपस्थिताः, धूमायमानाः,—धूममुद्वमन्त इत्यर्थः, शीतलाद्भवदाज्ञितानुकूलपवनाभावेन असम्यग्ज्वलिततया निर्वाणोन्मुखा इति भावः, कोपाग्नयः—कोपानला यासु तथोक्ताः, भवदभिलापमात्रेणैव युद्धाय प्रस्थानेच्छव इति भावः, सुलभेति।—सुलभा—सुप्रापा, ईप्सिता इति यावत् असिधारातोयेन—शत्रुनिपातितनिस्त्रिंशधाराजलेन, तृप्तिः,—सौहित्यं, पिपासानिवृत्तिरित्यर्थः, आनन्द इति यावत् यासां तथाविधाः रणाङ्गने शत्रूणाम् आसप्रहारान् आकाङ्क्षमाणा इति भावः, विकटेति।—विकटानि—विशालानि दुरवगाहानीत्यर्थः, बाहव एव—भुजा एव, वनानि—अरण्यानि, तेषां छायाभिः,—अनातपैः इत्यर्थः, बाहुवीर्यैरिति भावः, उपगूढाः,—आलिङ्गिताः, सङ्गता इत्यर्थः, धीरतायाः—धैर्यशालितायाः, निवासेति।—निवासस्य—अवस्थानस्य, शिशिरभूमयः,—शीतलप्रदेशाः, न केवलम् उद्दामवीर्यशालिनः, किन्तु धीरा अपि इत्यर्थः, दुष्प्रधर्षबलसम्पन्नत्वेऽपि विवेकवन्तः, न तु शठकारिण इति भावः, सुभटानां—महायोद्धृणाम् उरः इति।—उरांसि—वक्षःस्थलानि एव, कवाटभित्तयः,—कवाटवत् दृढप्रशस्तवक्षःस्थलानीत्यर्थः, स्वायत्ताः,—स्वस्य—आत्मनः, भवतः इति भावः, आयत्ताः,—अधीनाः।

ऽभिमानमहासन्निपातान्। (२७५) म्रदय सततसेवाऽञ्जलिमुकुलितकरसम्पुटोष्मभि रिष्वसनगुणकिणकार्कश्यानि। (२७६) येन एव ते गतः पिता पितामहः प्रपितामहो वा, तमेव मा हासीः त्रिभुवनस्पृहणीयं पन्थानम्। अपहाय कुपुरुषोचितां शुचं प्रतिपद्यस्व कुलक्रमागतां केसरी इव कुरङ्गीं राजलक्ष्मीम्। देव! देवभूयं गते नरेन्द्रे, (२७७) दुष्टगौडभुजङ्गजग्धजीविते च राज्यवर्द्धने, वृत्तेऽस्मिन् महाप्रलये

---

मिथ्याभिमानाः,—वृथा गर्वाः, अहितानामिति भावः, त एव सन्निपाताः—कफवातपित्तजरोगविशेषास्तान् जय—पराभव अपनय इत्यर्थः भवच्चरणयोः निपात्य निरभिमानाः क्रियन्तामिति भावः। सन्निपाते शिरसो गौरवं भवति, तच्च लङ्घनादिना प्रशाम्यति इति ध्वन्यते।

(२७५) सततेति।—सततं—निरन्तरं क्रियमाणा इत्यर्थः सेवाः—परिचर्याः, भवच्चरणयोरिति शेषः, यः अञ्जलिः—युतौ करौ इत्यर्थः, ('तौ युतावञ्जलिः पुमान्' इति करविवरणे अमरः) तेन मुकुलितस्य—मुकुलतां गतस्य सङ्गतस्य इत्यर्थः, करसम्पुटस्य—युक्तकरद्वयस्य इत्यर्थः ऊष्मभिः—सन्तापैः, सन्ततकरद्वयसङ्घर्षजातैरिति भावः इष्विति।—इषवः,—शराः अस्यन्ते—क्षिप्यन्ते अनेन इति इष्वसनं—धनुः, तस्य गुणः—मौर्वी, तेन ये किणाः—कर्कशचिह्नानि अविरतज्याऽऽकर्षणेन इति भावः तेषां कार्कश्यानि—काठिन्यानि, शत्रुकराणाम् इति शेषः, म्रदय—शिथिलय, कोमलानि कुरु इत्यर्थः, ऊष्मस्वेदेन किणकार्कश्यम् अपनीयते इति प्रसिद्धिः, शत्रून् धनुर्ज्याऽऽस्फालनत्याजनेन सेवकान् कुर्विति भावः। इह किणादिमार्दवविधानेन विपक्षाणां सान्धिकालिकशस्त्रवर्जनस्यापादनात् नृपस्य सदाजय असाधारणविक्रमशालित्वं प्रदर्शितम् इति सङ्क्षेपः।

(२७६) येन, यथा इति शेषः। त्रिभुवनस्पृहणीयं—जगज्जनलोभनीयं पन्थानं—मार्गं वीरोचितमिति भावः, मा हासीः,—मा त्याक्षीः। कुपुरुषोचिताम्—कापुरुषयोग्याम्, शुचं—शोकम् अपहाय—परित्यज्य, केसरी—सिंहः कुरङ्गीमिव—मृगीमिव कुलक्रमागतां—वंशपरम्पराप्राप्तां राजलक्ष्मीं प्रतिपद्यस्व—गृहाण। नरेन्द्रे—राजनि प्रभाकरवर्द्धने इति यावत् विषवैद्ये च ("नरेन्द्रस्तु महीपाले विषवैद्ये च पुंस्ययम्" इति मेदिनी) देवभूयं—देवत्वम्।

(२७७) दुष्टेति।—दुष्टः—दुर्वृत्तः क्रूरश्च, गौडः,—गौडाधिप एव भुजङ्गः,—आशीविषः, तेन जग्धं—भक्षितं, निहतं दष्टञ्चार्थः, जीवितं—जीवनं यस्य तथाभूते।

धरणीधारणाय अधुना त्वं शेषः। (२७८) समाश्वासय अशरणाः प्रजाः। (२७९) क्ष्मापतीनां शिरःसु शरत्सवितेव ललाटन्तपान् प्रयच्छ पादन्यासान्। (२८०) अहितानाम् अभिनवसेवादीक्षादुःखमन्तःश्वासधूममण्डलैः नखम्पचैः प्रचलित-चूडामणिचक्रवालबालातपैश्च आयाहि कल्माषपादताम्।

---

महाप्रलये—महासङ्कटे, समरक्षये इति भावः, कल्पान्ते च, उप—उपस्थिते, धरणीधारणाय—पृथ्वीपालनाय पृथ्वीभारवहनाय च शेषः,—अवशिष्टः, अनन्तनागश्च। इह श्लिष्टपदैः प्रथमेनानेकार्थप्रतीतेः श्लेषानुप्राणितं व्यस्तरूपकम्।

(२७८) समाश्वासय—सान्त्वय। अशरणाः—निराश्रयाः, प्रभाकरवर्द्धन-राज्यवर्द्धनयोः अकाले कालेन दुरात्मना कवलनात् सम्प्रति निरवलम्बाः इत्याशयः।

(२७९) क्ष्मापतीनां—राज्ञां विद्विषामिति भावः, गीर्वाणानां, पर्वतानामित्यर्थः। शरत्सविता इव—शारदीयः सूर्य इव ललाटन्तपान्—भालतापिनः पादन्यासावमाननात् शिरःपीडाकरानित्यर्थः, अतिप्रचण्डानित्यर्थश्च, ["असूर्य्य ललाटयोर्दृशितपोः" (३।२।३६ पा०) इति खश्, "अरुर्द्विषद्—" (६।३।६७ पा०) इत्यादिना मुमागमश्च] पादन्यासान्—चरणरूपन्यासवस्तूनि स्वचरणपातानित्यर्थः, किरणवर्षपातांश्च प्रयच्छ—निधेहि सर्व्वान् विद्विषः स्वचरणे प्रणतान् कुरु इत्यर्थः। अत्र विशेषणश्लेषात् श्लिष्टोपमालङ्कारः।

(२८०) अहितानां—शत्रूणाम् अभिनवेति।—अभिनवाः,—अपूर्वाः अननुष्ठितपूर्व्वत्वादिति भावः या सेवाः—चरणसंवाहनानि ता एव दीक्षाः—अवश्यकर्त्तव्यव्रतविशेषाः तासु यत् दुःखं—क्लेशः वाक्कष्ट इति भावः तेन सन्तप्तानाम्—उष्णानाम्, श्वासधूमानां—निश्वासरूपाणामनलजन्यानां द्रव्यविशेषाणामित्यर्थः मण्डलानि—समूहाः तैः नखम्पचैः—नखान्—पादाङ्गुलीनिति यावत् पचन्ति—तपन्तीति नखम्पचाः तैः ["मितनखे च" (३।२।३४ पा०) इति खश्] प्रणतिकाले दुःखाननसन्तप्त-श्वासवायुसंयोगात् चूडामणिसमूहातपतापसम्बन्धाच्चात भावः प्रचलितेति।—प्रचलितानां—प्रलुण्ठितानां चूडामणीनां—शिरोरत्नानां पादपतितानाम् अहितानामिति भावः, चक्रवालानि—मण्डलानि, तेषां बालातपाः—नवोदितसूर्य्यकिरणकान्त्यवभासाः तैश्च, कल्माषपादतां—चित्रचरणत्वं धूमेन आतपेन च योगात् कृष्णपाण्डुरचरणत्व-मित्यर्थः, ("चित्रं किर्म्मीरकल्माषशबलैताश्च कर्बुरे" "कल्माषो यातुधाने च कृष्ण-पाण्डुरयोर्गुणे" इत्यमरमेदिन्यौ) तदाख्यराजर्षित्वञ्च। इह शोकोत्थधूमैः चरण

अपि च (२८१) हते पितरि एकाकी तपस्वी मृगैः सह संवर्धितः, सहजब्राह्मण्यमार्दवसुकुमारमनाः, कृतनिश्चयः, (२८२) चण्डचापवनाटनिटाङ्कारनादनिर्मदीकृतदिग्गजं, (२८३) गुञ्जज्ज्याजालजनितजगज्ज्वरं समयम् उद्यतम् एकविंशतिकृत्वः कृत्तवंशम् उत्खातवान् राजन्यकं परशुरामः।

---

पतितनरपतिचूडामणिचक्रवालज्वालानपेक्ष धूमनिष्कितया महार्हरत्नभासुरतया च चित्रचरणत्व प इनेन स्वगुणत्यागपूर्वक अनुत्कृष्टगुणग्रहोऽभूत् इति तद्रूप यन्त्रार।

(२८१) पितरि—जमदग्नौ, हते—व्यापादिते, कार्तवीर्येण इति शेष, एकाकी—असहाय, साधनविवर्जित इति यावत, ["एकादाकिनिश्चासहाये" (५।३।५२ पा०) इत्याकिनिच] तपस्वी—तापस, शान्तात्मा इति भाव। संवर्धित —पालित, स्वभावभीरुकुरङ्गसहसङ्गात प्रकृत्या कातरोऽपीति भाव, सहजेति।—सहजस्य—स्वाभाविकस्य, ब्राह्मण्यस्य—ब्राह्मणाना भावो ब्राह्मण्य तस्य, ब्रह्मवर्चस्य विप्रत्वस्य वा, मार्दवेन—मृदुत्वेन ब्राह्मणसुलभेनेत्यर्थ, सुकुमारम्—अतिकोमल मन,—चित्त यस्य तथाभूत, सौम्यप्रकृतिरिति यावत्, कृतनिश्चय,—पितृघ्नान् निर्हनिष्यामीति कृतप्रतिज्ञ सन्।

(२८२) चण्डेति।—चण्डाना—उग्रदर्शनाना, भीतिप्रदानामित्यर्थ, चापवनाना—धनुर्वनाना अटन,—कोटय, अग्रभागा इत्यर्थ ("कोटिरस्याटनि" इति धनुरन्तरस्य अमर) तासा टाङ्कारनादेन—टङ्कारध्वनिना, गुणाकर्षणकालिकेनेत्यर्थ, निर्मदीकृता —मदशून्यीकृता, दिग्गजा,—ऐरावतादय येन तथाभूत, दिग्गजमदशोषणधनुष्टङ्कारमिति यावत्, महाशूरमिति भाव।

(२८३) गुञ्जदिति।—गुञ्जद्भि,—नदद्भि ज्याजालै,—धनुर्मौर्वीनिचयै आकर्षणजनितैरिति भाव, जनित —उत्पादित, जगता—भुवनाना, ज्वर —सन्ताप येन तथाभूत समय—सकलम, उद्यत —सङ्ग्रामप्रवृत्तमित्यर्थ, एकेति।—एकविंशतिकृत्व —एकविंशतिवारम, ["सङ्ख्याया क्रियाऽभ्यावृत्तिगणने कृत्वसुच" (५।४।१७ पा०) इति सङ्ख्यावाचकाच्छब्दात् अभ्यावृत्तिगणनेऽर्थे कृत्वसुच] कृत्त —छिन्न, वंश—कुल यस्य तथाभूत, राजन्यक—क्षत्रियसमूहम, उत्खातवान्—उन्मूलितवान। पुरा कार्तवीर्यार्जुनो हैहयाधिपति तपोवनं मृगयाप्रसङ्गादागत जमदग्निना मुनिना कामधेनुप्रभावेण सत्कृत। इष्ट्वा च नृपति अतीव प्रीत कामधेनु ता यहीतुमना मुनि ययाचे। मुनिस्तु देवर्ल्पिततिथिक्रियार्थं ता

किं पुनः (२८४) नैसर्गिककायकार्कश्यकुलिशायमानमानसो मानिनां मूर्द्धन्यो देवः? तदद्य एव (२८५) कृतप्रतिज्ञो गृहाण गौडाधमजीवितध्वस्तये जीवितसङ्कलनाकुलकाला-काण्डदण्डयात्राचिह्नध्वजं धनुः। न हि अयम् (२८६) अराति-रक्तचन्दनचर्चाशिशिरोपचारमन्तरेण शाम्यति परिभवानल-

---

न शातुमैच्छत्। तेन हि रुष्टो राजा बलात्तां जहार। मुनिरपि कोपितस्तेन तत्र बाधामजनयत्, एवमन्योऽन्यं सङ्घर्षे समुत्पन्ने राजा मुनिं निहत्य धेनुं तां बलात् स्वगृहमानिनाय। प्रवासप्रत्यागतः परशुरामः श्रुत्वा तु पितृनिधनं महारोषकषायित-चेता हैहयाधिपं कार्त्तवीर्य्यं प्राक् निहत्य एकविंशतिवारं पृथिवीमक्षत्रियां कृत्वा तेषां रुधिरप्रवाहेण पितॄन् तर्पयामासेति पौराणिकी वार्त्ताऽत्रानुसन्धेया।

(२८४) नैसर्गिकेति।—नैसर्गिकेण—स्वाभाविकेन, कायकार्कश्येन—देहकाठिन्येन, कुलिशायमानं—कुलिशं—वज्रं, तद्वदाचरत्, अतिकठिनतया कुलिशोपममिति भावः, मानसम्—चित्तं यस्य तथाभूतः, चक्रियत्वादिति भावः मानिनां—मानवतां, मानधनाना-मिति यावत् मूर्द्धन्यः,—शिरःस्थितः इत्यर्थः, मुख्य इति यावत्, यदि तादृशः स्वभावकोमल-ब्राह्मणः परशुरामोऽपि स्वमर्षेण घातकान् शत्रून् निःशेषमुन्मूलितवान्, तर्हि किं पुनः प्रकृतिकठोरचक्रवर्त्तिभूतस्य भवतः सम्बन्धे वक्तव्यम्? अवश्यमेव भवता गौडप्रभृतयः शत्रवः समुन्मूल्य हन्तव्या इत्याशयः। एतेन परशुरामादपि आधिक्यप्रतिपादनात् व्यतिरेकालङ्कारः।

(२८५) कृतप्रतिज्ञ,—गृहीतसन्ध, समहत्वा न प्रत्यावर्त्तिष्ये इत्येवं विहिताङ्गी-कार इत्यर्थः, गौडेति।—गौडाधमस्य—गौडापसदस्य जीवितध्वस्तये—जीवनध्वंसनाय, जीवितेति।—जीवितानां—प्राणानां, प्राणिनामिति भावः, सङ्कलनाय—सङ्ग्रहणाय, आकुलः,—व्यापृतः यः कालः,—अन्तकः यम इत्यर्थः, तस्य अकाण्डे सहसा, दण्डयात्रा—युद्धप्रयाणं, तस्याः चिह्नं—लक्ष्मभूतः, ध्वजः—पताका तत्स्वरूपमित्यर्थः, दृश्यन्ते हि भटाः युद्धयात्रायां पताकादिभिरुपशोभिता भवन्ति भवान् अस्मदीयैः धनुर्भिः प्रतिदिशं तथाभूताः, यथा जनानां भवत् धनुष्काण्डैः प्राणिप्राणहरणपटीयसः यमस्य किङ्कराणां प्राणहरणप्रयाणे विजयपताकाभानिर्भवेदिति तात्पर्यं, धनुः—कार्मुकं, गृहाण—प्रतिपद्यस्व, अचिरमेव तस्य प्राणान् नाशय इति समुदितार्थः।

(२८६) अरातीति।—अरातीनां—विद्विषां, शत्रूणामित्यर्थः, रक्तानि—रुधिराणि

संज्वरसुखायमानस्पर्शशीतलेषु क्षत्रियक्षतजह्रदेषु अस्नायि", इत्युक्त्वा व्यरंसीत्।

देवस्तु हर्षस्तं प्रत्यवादीत्,—"करणीयमेव इदम् अभिहितं (२८९) मान्येन। इतरथा हि मे गृहीतभुवि भोगिनाथेऽपि दायाददृष्टिः ईर्ष्यालोः भुजस्य। (२९०) उपरि गच्छति इच्छति निग्रहाय ग्रहगणेऽपि भ्रूलता चलितुम्। अनमत्सु शैलेषु अपि कचग्रहम् अभिलषति दातुं करः।

---

संज्वराः—सन्तापाः, ते सुखायमानाः,—सुखं वेदयमानाः, सुखं निरन्तरमुत्पादयन्त इत्यर्थः, सुखप्रदा इति भावः, ["सुखादिभ्यः कर्तृवेदनायाम्" (३।१।१८ पा०) इति सुखशब्दात् कर्तरि क्यङि शानचि च रूपम्] स्पर्शेन शीतलाश्च—हिमस्पर्शाश्च तेषु, [ततोऽत्रसमासोत्तर विशेषणसमासः] क्षत्रियेति।—क्षत्रियाणां—राजन्यानां, क्षतजानि—रुधिराणि, तेषां ह्रदाः,—अगाधजलस्थानानीव अगाधशोणितपूर्णाशयविशेषाः तेषु अस्नायि—स्नातं, स्वभावकोमलब्राह्मणोऽपि परशुरामः शत्रुरुधिरैः स्नात्वा परिभवप्रतीकारं कृतवान्, कठोरप्रकृतिक्षत्रियेण त्वया तदवश्यकर्तव्यमेव इत्यत्र न कापि विचिकित्सा इति तात्पर्यम्। व्यरंसीत्—विरराम, मौनमवलम्बितवानित्यर्थः।

(२८९) मान्येन—मान्यवरेण। इतरथा हि—अन्यथैव करणीयत्वोपदेशाकरणेऽपि इति भावः, यद्वा—इतरथा हि—अन्यथाऽपि अरिनिग्रहार्थं कार्यान्तरलक्षणे इत्यर्थः, गृहीतभुवि—भूभारग्राहिणि इत्यर्थः, भोगिनाथे—शेषाहौ, नरनाथे च दायाददृष्टिः,—दायं—पैतृकं धनं तत् आदत्ते इति दायादः,—पैतृकधनांशहरः इत्यर्थः, तस्मिन्निव दृष्टिः—विरुद्धदर्शनमिति यावत् मत्तोऽन्योऽपि भूभारग्राही अस्ति इति प्रतिपक्षबुद्धिरिति भावः ईर्ष्यालोः,—परोत्कर्षासहिष्णोः, परान् विद्विषत इत्यर्थः [ईर्ष्यां लाति इति विग्रहे "मृगय्वादयश्च" (उ० १ पा० ३८ सू०) इति कुप्रत्ययान्तो निपात्यते]।

(२९०) इच्छतीति।—उपरि—ऊर्ध्वदेशे अन्तरीक्षे इत्यर्थः, गच्छति—चरति, ग्रहगणे—ज्योतिर्गणेऽपि, निग्रहाय—कथं मे उपरि गच्छतीति रोषात् दण्डदानाय, भ्रूलता—भ्रूवल्ली चलितुं—कुटिलीभवितुमित्यर्थः, इच्छति—अभिलषति मामतिक्रम्य दीनं केन भावेन कश्चिदपि गमिष्यति इति न तु सहनम् एवेति भावः। शैलेषु—पर्वतेषु, अनमत्सु—नतिमकुर्वत्सु इत्यर्थः महतिकर्माद्येन न चाभिमानादिकेषि

शोकक्रियाकरणस्य । अपि च (२८४) हृदयविषमशल्ये मुसल्ये जीवति जाल्मे जगद्विगर्हिते गौडाधिपाधमचण्डाले जिह्रेमि शुष्काधरपुटः पोटेव प्रतिकारशून्यं शुचा फूत्कर्तुम् । (२८५) अकृतरिपुबलाबलाविलोललोचनोदकदुर्दिनस्य मे कुतः करयुगलस्य जलाञ्जलिदानम् ?

---

पुनः वक्तव्यमिति शेषः, भवदुपदेशात् ईदृशदुर्घटनापाताद्वा प्रागेव मे एवंविधः अभिलाषः प्रादुर्भूतः अधुना ईदृशदुर्जातजननानन्तरं तत्साधने किं पुनर्वक्तव्यम् ? अवश्यमेव तत् साधयिष्यामि इति भावः । जातामर्षनिर्भरे—अमर्षवेगापूरिते इत्यर्थः । शोकक्रियाकरणस्य—शोकसूचककर्माचरणस्य, अवकाशः—अवसरः नास्त्येव—न किञ्चिदपि वर्तते, अथवा,—किं पुनः इति परेण अन्वेतव्यम्, तथा च—ईदृशे दुर्जाते जाते जातामर्षनिर्भरे च मनसि शोकक्रियाकरणस्य अवकाशः नास्त्येव इत्यत्र किं पुनः वक्तव्यम्, प्रागेव तथाविधः अभिलाषः जातः, अधुना मातुलादिशोचनीयमृत्युना सर्वानेव दुर्विनीतान् दण्डयिष्यामि नास्ति मे शोकावसरः, क्रोध एव शोकस्थानमध्यकार्षीत् इति भावः ।

(२८४) हृदयविषमशल्ये—मर्मान्तर्निदारुणव्यथाजनके, यद्वा—हृदये—चेतसि, विषम—दुःसहमित्यर्थः, शल्य—शङ्कुः यस्मात् तथाभूते मनःपीडादायके इत्यर्थः, हृदयनिखातविषमशल्यभूते इत्यर्थो वा अतिदारुणशल्यात्मभूत इति यावत्, मुसल्ये—मुसलम्—अयोऽग्रेण, अस्त्रविशेषेण इत्यर्थः, वध्यः,—नाश्यः तस्मिन् [“विध्यो विषण्यो वध्यो मुसल्यो मुसलेन च” इत्यमरः । मुसलम् अर्हति इति विग्रहेण “दण्डादिभ्यो यत्” (५।१।६६ पा०) इति यत्] जाल्मे—पामरे, (“जाल्मः स्यात् पामरे क्रूरेऽसमीक्ष्यकारिणि त्रिषु” इति मेदिनी) जगद्विगर्हिते—त्रिभुवननिन्दिते इत्यर्थः, गौडाधिपाधमचण्डाले—हीनश्वपचसदृशे गौडराजे जीवति—प्राणिति सति, पोटेव—पुंलक्षणयुता स्त्रीव, स्तनश्मश्रुादिमती नारीवेत्यर्थः, (“पोटा स्त्रीपुंसलक्षणा” इत्यमरः) शुचा—शोकेन, फूत्कर्तुं—फूत्कारम्—अस्फुटशब्दविशेषं कर्तुमित्यर्थः जिह्रेमि—लज्जे ताहृशफूत्कृत्यादिभिः शोकसूचकाव्यक्तध्वनिविकाराः क्रियन्ते अक्षमैः पुरुषैः, न तु वीरैरिति हृदयम् ।

(२८५) अकृतेति ।—न कृतं—न जनितं रिपुबलाबलानां—शत्रुसैनिकाङ्गनानां विलोलानां—चञ्चलानां, लोचनानां—नयनानां उदकैः,—अश्रुभिः, दुर्दिनं—मेघाच्छन्नमहः येन तथाभूतस्य, रिपुरमणीनां नयनासारजनितमेघा

(२८६) अदृष्टगौडाधमचिताधूममण्डलस्य वा चक्षुषः स्वल्पमपि अश्रुसलिलम्? श्रूयतां मे प्रतिज्ञा,—शपामि आर्यस्यैव पादपांसुस्पर्शेन, यदि परिगणितैः एव वासरैः (२८७) सकलचापचापलदुर्ललितनरपतिचरणरणरणायमाननिगडां निर्गौडां न करोमि मेदिनीं, ततः तनूनपाति पीतसर्पिषि पतङ्ग इव

---

त्यर्थं, मे—मम, [कर्तरि षष्ठी] करयुगलस्य—भुजद्वयस्य, [शेषे षष्ठी, जलाञ्जलिना सहास्यान्वयः] जलाञ्जलिदानं—तर्पणार्थम् उदकाञ्जलिदानम्, भावि इति भावः, कुतः? न कुतोऽपि जलात् तस्मादन्यस्मादित्यर्थः, रिपुनारीणां हतभर्तृकाणां नयनसलिलैरेव अञ्जलिं पूरयित्वा भ्रातुः तर्पयिष्यामि इति भावः।

(२८६) अदृष्टेति।—न दृष्टं—नावलोकितं, गौडाधमस्य—पापगौडाधिपस्य, चिताधूममण्डलं—शवदाहार्थविरचितप्रज्वलत्काष्ठपुञ्जोद्गतवह्निध्वजसमूहः येन तथाभूतस्य चक्षुषः,—नेत्रस्य, मे इति शेषः, स्वल्पमपि—किञ्चिदपीत्यर्थः, अश्रुसलिलं—बाष्पवारि, कुतः? इति पूर्वेणान्वयः, शत्रौ शवदेहमदृष्ट्वा नैव अश्रुजलं कियदपि पातयिष्यामीत्यर्थः। [अत्र "अश्रुनेत्राम्बुरोदनञ्चास्रमश्रु च" इत्यमरोक्तेः अश्रुशब्देनैव गतार्थत्वात् सलिलपदमधिकमिति अधिकपदत्वं दोषः इत्यवधेयम्]। पादपांसुस्पर्शेन—चरणरजःस्पर्शेन, तत्स्पर्शनं कृत्वेत्यर्थः, शपामि—शपथं करोमि, [अत्र "शप उपालम्भे" इति वार्त्तिकबलात्, आक्रोशार्थकात् शपतेः आत्मनेपदमेव नियमितम्, इह तु तद्विहितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वं दोषः इत्यवधेयम्] परिगणितैः,—सङ्ख्यातैः, कृतसङ्ख्यतया स्वल्पैरित्यर्थः, वासरैः,—दिवसैः ["अपवर्गे तृतीया" (२।३।६ पा०) इति तत्रापि बोधितत्वात् कालवाचकात् वासरशब्दादत्यन्तसंयोगे तृतीया ज्ञेया]।

(२८७) सकलेति।—सकलानां—समग्राणां, चापचापलेन—धनुश्चाञ्चल्येन, धनुर्धरा एव वयमित्यभिमानेनेति भावः, दुर्ललितानां—दुर्विनीतानां, नरपतीनां—राज्ञां, चरणेषु—पादेषु, रणरणायमानाः,—रणरणशब्द इव आचरन्तः, रणरणशब्दं कुर्वन्त इत्यर्थः, [रणशब्दस्य "नित्यवीप्सयोः" (८।१।४ पा०) इति द्वित्वे पश्चात् 'कर्तुः क्यङ् सलोपश्च' (३।१।११ पा०) इति उपमानात् कर्तुः रणरणशब्दात् क्यङि शानचि च रूपमेतदिति ज्ञेयम्] निगडाः,—लौहशृङ्खलानि यस्यां तथाभूतां, तथा निर्गौडां—निहतगौडपतिं, गौडाधिपवर्जितामित्यर्थः, दुष्टगौडेश्वरं निहत्य सर्वानेव अन्यान् दुर्विनीतान् नृपान् विजित्य च लौहशृङ्खलनिगडितपादान् यदि तान् कारागारे

(२००) आ वारुणीमदस्खलितवरुणवरनारीनूपुररवमुखरकुहरकुक्षेः अस्तगिरेः, (२०१) आ गुह्यकगेहिनीपरिमलसुगन्धिगन्धपाषाणवासितगुहागृहाच्च गन्धमादनात् सर्वेषां राज्ञां,—(२०२) 'सज्जीक्रियन्तां कराः करदानाय शस्त्रग्रह-

-स्थितादिति भ्रमः, त्रिकूटसुवेलयोरेकत्वेन गिरिवाचकतया, भगवती रामस्य विजयमाला या त्रिकूटगिरिगात्रे टङ्केन अङ्कापिता सा सुवेलगिरावपि, तेन दक्षिणस्यां दिशि श्रीरामचन्द्रविजयमालाङ्कितसुवेलगिरिपर्यन्तमिति समुदितार्थः। तथा च वाल्मीकीये "ततस्तमक्षोभ्यबलं लङ्काधिपतेश्चराः। सुवेले राघवं शैले निविष्टं प्रत्यवेदयन्॥" रा० लं० २१ स० १ श्लो०।

(२००) वारुणीति।—वारुणी—सुराभेदः, तस्याः मदेन—तत्पानजनितविकारेणेत्यर्थः, स्खलिता,—मत्ततया प्रभ्रष्टचरणा इति भावः, या वरुणस्य—पश्चिमदिक्पालस्य, वरा,—उत्तमा, नारी,—स्त्री, तस्याः नूपुररवेण—चरणनिहितानां मञ्जीराणां निनादेन, मुखरः,—सशब्दः, कुहरकुक्षिः,—गह्वराभ्यन्तरं यस्य तथाभूतात्, अस्तगिरेः,—अस्ताचलात्, पश्चिमदिग्वर्त्तिनः इति भावः, यस्मिन्नस्तगिरौ पश्चिमाशाऽधिपतेः वरुणस्य वरवर्णिन्यः वारुणीं सुरां निपीय मत्ततया पतित्वा सततं मञ्जीररवेण गह्वरं मुखरयन्ति, पश्चिमायां दिशि तदस्ताचलपर्यन्तमिति समुदितार्थः।

(२०१) गुह्यकेति।—गुह्यकानां—देवयोनिविशेषाणां, निधिरक्षकयक्षविशेषाणामित्यर्थः, या गेहिन्यः—नार्यः, तासां परिमलेन—अतिमनोहरगन्धेन, गात्रानुलेपनघृष्टकुङ्कुमादिगन्धेनेत्यर्थः, ("स्यात् परिमलोऽतिमर्दातिमनोहरगन्धयोरपि" इति मेदिनी) सुगन्धयः,—सौरभवन्तः, ये गन्धपाषाणाः,—गन्धप्रधानाः शिलाः, गन्धकधातुमय्यः शिला वा तैर्वासितानि—सुरभितानि, गुहा—कन्दरा, गृहाणीव—भवनानीव यत्र तथाभूतात्, गन्धमादनात्—तदाख्यपर्वतात्, उत्तरस्यां दिशि गन्धमादनपर्वतपर्यन्तमित्यर्थः [सर्वत्र आङ्योगे पञ्चमी]। अयमाशयः,—गन्धमादनशैलो हि निसर्गगन्धवद्भिः शिलाभिः सदैव, तथापि गुह्यकगेहिनीनां अनुलेपनभूतघृष्टकुङ्कुमादिसमुद्भूतेन त्रिभुवनविलासजनितेन वा परिमलेन गुहागृहाण्यपि नितरां सुगन्धीनि कुर्वन्तीति, अपूर्वविलासभूमिरेव भवति हि तेन तत्पर्यन्तमिति भावः, सर्वेषां राज्ञां—समस्तानां नराधिपानां, ["षष्ठी शेषे" (२।३।५० पा०) इति सम्बन्धमात्रविवक्षायां षष्ठी] विज्ञप्यताम् इति योजना, एवमिति शेषः।

(२०२) किं तत् यद्विज्ञप्तुमुपदिश्यते इत्याशङ्कायामाह, सज्जीत्यादि।—

णाय वा ; गृह्णन्तां दिशः चामराणि वा ; नम्यन्तां शिरांसि धनूंषि वा ; कर्णपूरीक्रियन्ताम् आज्ञा मौर्व्यो वा ; (२०३) शेखरीभवन्तु पादरजांसि शिरस्त्राणि वा ; घटन्ताम् अञ्जलयः करिघटाबन्धा वा ; (२०४) मुच्यन्तां भूमय इषवो वा ; समालम्ब्यन्तां वेत्रयष्टयः कुन्तयष्टयो वा ; (२०५) सुदृष्टः क्रियताम् आत्मा मच्चरणनखेषु

करा,—हस्ता, करदानाय—राजभागदानाय (इति सन्धिपक्षाव), शस्त्रग्रहणाय—युद्धकरणायेति भाव, (इति विग्रहपक्षाव) सज्जीक्रियन्ता—प्रवर्त्त्यन्ता, लप्यन्तामित्यर्थं, सर्वे एव मदधीनता स्वीकृत्य सम्राजे मह्य कर ददतु, तदन्यथा चेत युद्ध कुर्वन्तु इति समुदिताय, मा सम्राट्त्वेन न स्वीकुरुथ चेत तदा युद्धे युष्मान विजित्याचिरादेव मदधीनता नेष्यामीत्याशय । एवमुत्तरत्रापि । दिश,—आशा गृह्यन्ता—राज्य विहाय पलाय्य आश्रीयन्ता, चामराणि वा—बालव्यजनानि वा, गृह्यन्ता—धार्य्यन्ता मत्सेवाय मिति भाव, युष्माभिरिति शेष । शिरासि—मस्तकानि, नम्यन्ता—मच्चरणयो प्रणिपत्यन्ता धनूषि—चापा वा नम्यन्ता—ज्यारोपणेन आकृष्यन्ता तानि युद्धाय सज्जितानि क्रियन्ताम इत्यर्थ युष्माभि इति शेष । आज्ञा,—आदेशा मदीया इति शेष, कर्णपूरीक्रियन्ता—श्रवणानामलङ्कारी क्रियन्ता, कर्णभूषण यथा सतत कर्णे स्थित शोभते तथा मदीयाज्ञा नितत कर्णाभ्याम् सादर निधीयतामिति भाव, अथवा मौर्व्य,—शिञ्जिन्य धनुर्गुणा इत्यर्थ ("मौर्वी ज्या शिञ्जिनी गुण" इत्यमर) कर्णपूरीक्रियन्ताम—आकर्णमाकृष्यन्ता, युद्धाय इति भाव । इह आज्ञाना मौर्वीणाञ्च कर्णपूरीकरणयो सन्धिविग्रहोपधायकयोरेकदा कर्त्तुमशक्यत्वादिरोध, स चेकदाऽश्रूयमाणत्वमान तुल्यवत्त्वमिहाज्ञामौर्वीकर्णपूरीकरणयो द्वयोरपि तेन तयोरेकत्रैव कर्त्तुमशक्यत्वात सन्देहस्यैव पर्य्यवसानतया विकल्पालङ्कृति इत्यवदातम ।

(२०३) पादरजासि—पदधूलय मदीयानीति भाव शेखरीभवन्तु—शिरोभूषण भूतानि भवन्तु शिरस्त्राणि वा—युद्धकाले शिरोरक्षार्थं शिरोवेष्टनविशेषा वा शेखरी भवन्त्वित्यन्वय युष्माकमिति शेष । अञ्जलय —युक्तकरा, युक्तकरद्वयम इत्यर्थ, घटन्ता—जायन्ता प्रणतये करद्वय सयोजयन्ताम इत्यर्थं, करिघटाबन्धा वा—हस्तिव्यूहरचना वा घटन्ता—भवन्तु इत्यर्थ ।

(२०४) भूमय,—राज्यानीति यावत इषव —शरा वा, मुच्यन्ता—त्यज्यन्ताम । वेत्रयष्टय,—दण्डलता, समालम्ब्यन्ता—गृह्यन्ता मद्गृहेषु भृत्यभावेन स्थीयतामिति भाव, कुन्तयष्टय,—कुन्तास्त्राणि वा, समालम्ब्यन्ता, युष्माभिरिति शेष ।

(२०५) मच्चरणनखेषु—मम पादनखरेषु सुस्वच्छतया दर्पणदर्शनविधि

(२०८) ततश्च निजाधिकारापहारभीत इव भगवति अपि क्वापि गते गततेजसि अहिमभासि, तामरसवनेषु अपि निगूढशिलीमुखालापेषु त्रासादिव सङ्कुचत्सु, (२०९) विहग-गणेषु अपि समुपसंहृतनिजपक्षविक्षेपनिश्चलेषु भिया इव

मित्यर्थः । अगलत्—अतिचक्राम आचर्यादित्यर्थ सायमभवत इति यावत्। दपप्रसर इव—अहङ्कारावेग इव। श्रुतपातञ्जस्य—श्रपथ श्रुतवत इत्यर्थ । शान्ति दष्मा—शान्त—अपगच्छन चर्चीन्मुख इत्यर्थ उष्मा—तेज औग्राञ्च यस्य तथाभूत, ( उष्मौ घर्म्माऽस्तु ण व्यष्ठ पुमानुष्मा स्त्रिया त्विषि" इति कोषात ) उष्मशब्दो नान्तो ऽदन्तश्च दृश्यते तेन नान्तस्यवोष्मशब्दस्याय प्रयोग इति ज्ञयम्। यो हि राज्ञ इवस्य एव दर्पादीम वचनमश्रौषीत तस्य गर्व सपदि विलुप्तोऽभूत का कथा अन्यथा स्वय दिवसोऽपि स्वाभाविकमुष्म विहाय भयात प्रशामात तात्पर्यम् ।

(२०८) "ततश्च" इत्यस्य "प्रदोषास्थाने नाविचर तस्थौ" इति परेण सम्बन्ध । निजेति।—निजस्य—आत्मन अधिकारस्य—स्वामित्वस्य जगत्प्रतपनरूपे कम्माण इति भाव अपहारात्—अपहरणकरणात् भीते इव—त्रस्त इव हर्षे विलोक्या दर्पान्मूलनाय वद्धपरिकर इति भाव गततेजसि—निष्प्रभ इत्यर्थ, अहिमभासि—उष्णरश्मौ रवौ इत्यर्थ क्वापि गते—अदर्शन प्राप्ते इत्यर्थ अस्तमिते इति भाव । निगूढेति।—निगूढा —गुप्ता नायकस्य प्रभाकरस्य अस्तमनमवलोक्य विरहदुःखादिव पद्मानां मुकुलीभावेन तद्रसोपपायिनां भ्रमराणां सपदि तत्रावरुद्धत्वादिति भाव शिलीमुखानां—भ्रमराणां बाणानाञ्च ( अलिवाणौ शिलीमुखौ इत्यमर ) आलापा —गुञ्जनानि इत्यर्थ शब्देषु पातशब्दा इत्यर्थश्च येषु तथाभूतेषु तामरसवनेषु —पद्मकाननेषु ( अथ तामरस पद्म ताम्र काञ्चनयोरपि इति मेदिनी ) त्रासादिव —भयादिव सङ्कुचत्सु—निमीलत्सु, अन्तराले स्थित्वा गुप्तभावेन मन्त्रणाकरणात कथमेते एव जल्पन्ति किमेषां मनसि वर्त्तते इति विविच्य इति भाव भ्रमरा शरपतनभयादिव कमलाभ्यन्तरमन्तर्गृहमिवाश्रयन्निव्याप व्यज्यते लोकेऽपि गृहाभ्यन्तरे प्रच्छन्न मन्त्रयता वेषाचित शब्दगुञ्जनमाकर्ण्य गृहाधिकारी भयात् सङ्कुचितो भवतीत्यपि दृश्यते ।

(२०९) विहगगणेषु—विहायसा—आकाशमार्गेण गच्छन्ति इति विहगा [“ड च विहायसो विहादेशो वक्तव्य” (वा०) इति ड ] तेषां गणा तेषु पक्षिवृन्देषु इत्यर्थ, समुपेति।—समुपसंहृत —सङ्कुचित इत्यर्थ निजपक्षाणां स्वपत्त्राणां,

अप्रकटीभवतु, भुवनव्यापिनीं सन्ध्यां प्रतिज्ञामिव मानयति नतशिरसि घटिताञ्जलिवने जने सकले, (२१०) स्वपदच्युतिचकितदिक्पालदीयमानाभ्रंलिहलोहप्राकारवलयासु इव बहलतिमिरमालातिरोधीयमानासु दिक्षु प्रदोषास्थाने न अतिचिरं तस्थौ। (२११) नमन्नृपलोकलोलांशुकपवनकम्पितशिखैः दीपिकाचक्रवालैः अपि प्रणम्यमान इव प्राहिणोत् लोकं, प्रतिषिद्धपरिजनप्रवेशश्च शयनगृहं

---

विक्षेप,—चालनमित्यर्थः ये तथाभूता, अत एव निश्चला,—अचञ्चला, स्थिरा इत्यर्थः तेषु, [ विशेषणसमासः ] अन्यत्र,—असुपसङ्हृत,—समाप्तिं गत, झटिति स्वयमेव विनष्ट इत्यर्थः, सम्राज हर्षस्याभ्युदय दृष्टेति भाव, निजपक्षाणाम्—आत्मसहायानां, ये विक्षेप,—प्रसार इत्यर्थ, तेन निश्चला तथाभूतेषु इत्यर्थ, स्थितेषु—तस्थिवत्, हर्षादिति भाव, पक्षे,—स्वपक्षसद्भावात्, अन्यत्र—स्वसहायाभावात् इति भाव, अप्रकटीभवतु—अप्रकाशतां गच्छतु। भुवनव्यापिनीं—तमसा जगदावरणकारिणीं, जगति व्याप्तिमावहन्तीमित्यर्थश्च, प्रतिज्ञामिव—शपथमिव, हर्षस्य इति भाव। मानयति—पूजयति, आद्रियमाणे इत्यर्थः। नतशिरसि—प्रणतमस्तके इत्यर्थः। घटिताञ्जलिवने—कृताञ्जलिसमूहे, सन्ध्यासमागमात् शिरसि अञ्जलिं बद्धा उपासितुं प्रवृत्ते इत्यर्थः।

(२१०) दिक्षु—आशासु, स्वपदेति।—स्वस्य—आत्मन, पदात्—अधिकारात्, लोकपालकत्वरूपात् इति भाव, च्युति,—भ्रंश, तस्मात् तेन वा चकिता,—शङ्किता, ये दिक्पाला,—दिगधिपतय इन्द्रादय, तै दीयमान—निधीयमानम्, अभ्रंलिह—गगनस्पर्शि, [ "वहाभ्रे लिह" (३।२।३२ पा० ) इति खश् ] लोहप्राकारवलयम्—अयसावरणमण्डलं यासु तथाविधासु इव, ( "प्राकारो वरण साल" इत्यमर ) बहलेति।—बहलया—प्रभूतया तिमिरमालया—अन्धकारपटलेन तिरोधीयमानासु—आच्छाद्यमानासु सतीषु, प्रदोषास्थाने—रजनीमुखीयसभाभवने, सायमुपवेशनार्हसभामण्डपे इत्यर्थः।

(२११) नमदिति।—नमता—प्रणिपतता, नृपलोकानां—राजजनानां, लोलस्य—चञ्चलस्य, सम्भ्रमनमनक्षोभादिति भाव, अंशुकस्य—वसनस्य, पवनेन—वायुना कम्पिता,—सञ्चालिता, शिखा,—ज्वाला येषां तै, दीपिकाचक्रवालै,—दीपमण्डलै। लोकं—परिजनमिति भाव, प्राहिणोत्—विससर्ज, स्वसमीपादिति

प्राविशत्, उत्तानश्च मुमोच अङ्गानि शयनतले। दीपद्वितीयश्च तम् अभिसर इव लब्धावसरस्तरसा भ्रातृशोको जग्राह। जीवन्तमिव हृदये निमीलितलोचनो ददर्श अग्रजम्। (२१२) उपर्युपरि भ्रातृजीवितान्वेषिण इव प्रसस्रुः श्वासाः। धवलांशुकपटान्तेन इव च अश्रुजलप्लवेन मुखम् आच्छाद्य निःशब्दम् अतिचिरं रुरोद; चकार च चेतसि,—(२१३) "कथं नाम आकृतिः तादृश्या युक्तः परिणामोऽयम् ईदृशः? पृथु-शिलासङ्घातकर्कशकायबन्धात् तातात् अचलात् इव लोहधातुः

---

शेषं यथास्थानं वा। प्रतिषिद्धेति।—प्रतिषिद्ध,—निवारित., परिजनानां—भृत्यानामिति यावत्, प्रवेशः—अन्तर्गमनं येन तथाभूतः। उत्तानः,—ऊर्द्ध्वमुखशायी, ("उत्तानमगभीरे स्यादूर्द्ध्वास्यशयिते त्रिषु" इति मेदिनी) शयनतले—शय्यायां, मुमोच—प्रसारितवानित्यर्थः। दीपद्वितीयः—दीपमात्रसहचरमित्यर्थः, एकाकिनमिति भावः, तं—हर्षम्, अभिसर इव—दस्युरिव, लब्धावसरः,—प्राप्तावकाशः, एकाकित्वादिति भावः, तरसा—बलेन जग्राह—आचक्राम, तदानीं भ्रातृशोकः समुदियाय इति भावः। भीषणो दस्युः यथा कमप्येकाकिनं दृष्ट्वा बलादाक्रामति, तथैव शोकः सपदि तद्धृदयमधिचकारेति समुदितार्थः।

(२१२) उपर्युपरि—अविरतमित्यर्थः, ["उपर्य्यध्यधसः सामीप्ये" (८।१।७ पा०) इति सामीप्यिकसामीप्ये द्विर्वचनं] भ्रातृजीवितान्वेषिण इव—भ्रातृजीवनस्यानुसन्धायिन इव श्वासाः—निश्वासमरुतः, अन्वेषणजश्रमेणेति भावः, प्रसस्रुः,—निर्गच्छन्ति स्म। धवलांशुकपटान्तेन इव—श्वेतवसनाञ्चलेन इव, अश्रुजलप्लवेन—बाष्पवारिपूरेण, अश्रुजलमेव तस्य क्रन्दनकालिकमुखाच्छादनवस्त्रकृत्यं चकार इति भावः, लोकोऽपि असह्यवस्तुपातादौ वस्त्राञ्चलेन मुखमावृत्य रोदितीति दृश्यते।

(२१३) नाम—वितर्के। तादृश्याः,—रमणीयायाः, सुन्दराकृतेरित्यर्थः, ईदृशः,—एवंविधः, शोच्य इत्यर्थः, परिणामः,—विपाकः, अपमृत्युरित्यर्थः, युक्तः,—उचितः। पृथ्विति।—पृथु,—विशाल., ["प्रथिम्रदि—" (उ० १ पा० २९ सू०) इत्यादिना कु सम्प्रसारणञ्च] शिलासङ्घात,—पाषाणस्तूप इत्यर्थः, तद्वत्, तेन च कर्कश,—कठिन, कायबन्ध.,—कलेवरघटनं यस्य तथाविधात्, तातात्—पितुः, अचलात्—पर्वतात्, लोहधातुरिव—लोहनामा खनिजः पदार्थविशेष इव,

कठिनतर आसीत् आर्य्य.। कथञ्च अस्य मे (२१४) हत हृदयस्य आर्य्यविरहे सकृदपि युक्तम् उच्छ्वसितुम्? (२१५) इयं सा प्रीतिर्भक्तिः अनुवृत्तिर्वा? बालिशोऽपि कः सम्भावयेत् आर्य्यमरणे मज्जीवितम्? (२१६) तत् तादृशम् ऐक्यम् एकपद एव क्वापि गतम्? अयत्नेन एव हतविधिना पृथक् कृतोऽस्मि। (२१७) दग्धरोषान्तरितशुचा सुचिरं रुदितमपि न मुक्तकण्ठं गतघृणेन मया। सर्वथा (२१८) लूतातन्तुच्छटाच्छिदुराः तुच्छाः प्रीतयः प्राणिनाम्।

---

कठिनतर,—अतिकठिन, पाषाणोत्थमपि लौह पाषाणादपि कठिन भवतीति प्रत्यक्षमिति भाव, अचलादुद्भूतोऽपि लौहधातुर्यथा ततोऽपि कठिनतर दृश्यते, तथैव पितुरपि भवज्ज हृदकाय आसीदिति तात्पर्यम्।

(२१४) हतहृदयस्य—अपारकस्य, भावसमुदायवर्ज्जितत्वादिति भाव, सकृदपि—एक क्षणमपि उच्छ्वसितु—प्राणितुम्।

(२१५) इयमिति।—सा प्रीति,—तथाविध दृढतर उभयो प्रणय, सा भक्ति,—पूज्यतया अकपट अनुराग, का अनुवृत्ति—आनुगत्यम् इयम्—ईदृशभाव प्राप्तेत्यर्थं। बालिशोऽपि—मूर्खोऽपि। सम्भावयेत्?—अशसत?।

(२१६) तत्—तातजीवद्दशायां परोकर्षभागतम् वा बाल्यादिकत प्रयनात तनादिना प्रवृद्धमिति भाव तादृश—सम्यक्लोकादिदितमित्यर्थ, ऐक्यम्—एकीभाव, अभिन्नभाव इत्यर्थ, एकपद एव—तत्काल एव आर्य्यस्य मरणादनन्तरमेवेत्यर्थं, ("एकपद तत्काल नपुंसक त्वक्मनि स्त्री स्यात्" इति मेदिनी)। अयत्नेन—यत्न विना एव, अनायासनैवेत्यर्थं, हतविधिना—दुर्दैवन, पृथक कृत,—विभिन्न कृत वियोजित इति भाव।

(२१७) दग्धेत।—दग्धेन,—हतेन अनिष्टदेनेति भाव रोषण—अराति प्रति कोपेन, अन्तरिता—व्यवहिता तिरोहितेति यावत शुक—शोक यस्य तथा भूतेन, अरातिनिधनाय क्रोधोदयात शोक विस्मरतत्यर्थ, गतघृणन—निर्दयेन ("घृणा दयाऽनुकम्पा स्यात्" इत्यमर) मया मुक्तकण्ठम—उच्चै, सुचिर—दीर्घकाल, न रुदितमपि—न क्रन्दितमपि।

(२१८) प्रीतय,—प्रणया, लूतेति।—लूतातन्तुच्छटा—लूता—ऊर्णनाभ,

(२१९) लोकयात्रामात्रनिबन्धना बान्धवता, यतोऽहमपि नाम पर इव आर्य्ये स्वर्गस्थे स्वस्थ इव आसे। किञ्च दैवहतकेन फलम् आसादितम् ईदृशि परस्परप्रीतिबन्धनिर्वृतहृदये सुखभाजि भ्रातृमिथुने विघटिते? (२२०) तथा चन्द्रमया इव जगदाह्लादिनो लोकान्तरीभूतस्य लग्नचिताग्नय इव आर्य्यस्य त एव दहन्ति गुणाः।" इत्येतानि च अन्यानि च

---

जालकारः कीटविशेष इति यावत्, ("लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः" इत्यमरः) तस्याः तन्तुच्छटा—सूत्रनिचयः, तद्वत् छिद्राः,—अल्पेन छेदार्हा इत्यर्थः, अत एव तुच्छाः,—वृथा, असारत्वेन गर्हणीया इत्यर्थः।

(२१९) लोकयात्रामात्रनिबन्धना—लोकव्यवहारमात्रफला, संसारयापनैकमात्रप्रयोजना इति यावत् बान्धवता—बन्धुत्वम्, स्वार्थसाधनार्थमेव लोके बन्धुत्वं क्रियते, न तु अविकृतगाढानुरागेण परोपकरणार्थम् इति भावः। नाम—कुत्सायां, विस्मये वा। पर इव—अन्य इव सोदरभिन्न इव इत्यर्थः। स्वस्थ इव—प्रकृतिस्थ इव, यथावत् नित्यक्रियाकरणात् सुखित इव इत्यर्थः आसे—तिष्ठामि। ईदृशि—एवम्प्रकारे, परस्परात्।—परस्परयोः—अन्योऽन्ययोः, प्रीतिबन्धेन—प्रणयभरेणेत्यर्थः, निर्वृत—सुस्थं सुखितमिति यावत् ('निर्वृतिः स्वस्थितायाञ्च गमने च सुखे स्त्रियाम्' इति मेदिनी) हृदय—चेतः यस्य तथाभूते, सुखभाजि—सुखभोगनिरते, भ्रातृमिथुने—सोदरयुगले विघटिते—विच्छिन्ने, जाते सति इति शेषः, दैवहतकेन—दग्धविधिना, किं फलं—को लाभः, आसादितम्?—प्राप्तम्? अस्मत्सम्बन्धनाशं सम्पाद्य दग्धविधेः कः फललाभोऽभूत् इति भावः, दुर्जना हि फलमनपेक्ष्यैव केवलं क्रूरस्वभावात् परानिष्ट-सम्पादने प्रवर्त्तन्ते इति तात्पर्य्यम्। "स्त्रीपुंसौ मिथुनं द्वन्द्वम्" इत्यमरोक्तेः मिथुन-शब्दस्य स्त्रीपुंसयोरभिधायकतया, अत्र भ्रात्रोः युगलार्थे प्रयोगः अवाचकत्वदोषग्रस्त इति विभाव्यम्।

(२२०) लोकान्तरीभूतस्य—परलोकप्रस्थितस्य मृतस्येत्यर्थः आर्य्यस्य—ज्येष्ठस्य, चन्द्रमयाः इव—इन्दुमयूखव्याप्ता इव सन्तापादिहरणेन प्रीणनादिति भावः, तथा—तादृशाः, सर्वलोकानुभूता इत्यर्थः, जगदाह्लादिनः,—भुवनवासिजनानाम् आनन्दवर्द्धना इत्यर्थः, ते एव—जीवति आर्य्ये ये तदीयाः गुणाः सर्वसन्तापनाशकाः अभूवन्, ते एवेत्यर्थः, गुणाः,—वात्सल्यशौर्य्यदाक्षिण्यादयः, दहन्ति।—लग्नाः,—रूढाः, चिताग्नय,—चितानलाः, मृतस्य तस्य दाहकालिकाः इति भावः तेषु तदाभूता इव,

हृदयेन पर्य्यदेवयत्। प्रभातायाञ्च (३२१) शर्व्वर्य्यां प्रातरेव प्रतीहारम् आदिदेश अशेषगजसाधनाधिकृतं स्कन्दगुप्तं द्रष्टुम् इच्छामि इति।

(३२२) अथ युगपत् प्रधावितबहुपुरुषपरम्पराऽऽहूयमानः, स्वमन्दिरात् (३२३) अप्रतिपालितकरेणुः चरणाभ्यामेव सम्भ्रान्तः, ससम्भ्रमैः दण्डिभिः उत्सार्य्यमाणजानपदः,

---

चिताग्निभिः सह सयुता इव इति यावत्, दहन्ति—भस्मीकुर्व्वन्ति, इदानीमिति शेषः। सर्व्वलोकजीवनभूता दाहनाशना शीतस्पर्शा जलादयोऽपि अग्निसम्पर्कादुत्तप्ता यथा दहन्ति, तथा तदर्जिताः कृतस्य तस्य भ्रातुरपि गुणाः चितानलसम्पर्कादुष्णाः सन्त इदानीं निरतिशयं मां दहन्तीति भावः, तस्य गुणराशीनां स्मृत्या शोकाः अतीव प्रज्वलिताः सन्तः मां सन्तापयन्तीति तात्पर्य्यम्। पर्य्यदेवयत्—परिदेवितवान्, विललापेत्यर्थः।

(३२१) शर्व्वर्य्याम्—रात्रौ। प्रतीहारम्—दौवारिकम्, [“उपसर्गस्य—” (६।३।१२२ पा०) इत्यादिना पाक्षिको दीर्घः अमनुष्ये इति निषेधात् कथमिह प्रयुक्तः? इत्याशङ्कायाम् उद्धारित ज्ञानेन्द्रसरस्वतीभिः—“कथं तर्हि दौवारिके प्रतीहारशब्दप्रयोग इति चेत्, अत्राहुः—प्रतिहारो द्वारं, तदस्यास्तीत्यर्शआद्यजिति” ]। अशेषगजसाधनाधिकृतम्—समस्तगजादिहस्तिसैन्याध्यक्षम्।

(३२२) “अथ” इत्यस्य “स्कन्दगुप्तः विवेश राजकुलम्” इति परेण सम्बन्धः। तं विशिनष्टि, युगपदित्यादि।—युगपत्—समकालं, प्रधावितानां—ससम्भ्रमं द्रुतानां, बहूनाम्—अनेकेषां, पुरुषाणां—भृत्यजनानामिति यावत् परम्पराभिः,—श्रेणीभिः, आहूयमानः,—आकार्य्यमाणः, महाराजहर्षादेशगौरवात् इति भावः।

(३२३) अप्रतिपालितकरेणुः,—अनपेक्षितगजवाहन इत्यर्थः सम्भ्रान्तः,—त्वरितः। ससम्भ्रमैः,—सत्वरैः, आदरातिशयवद्भिः, गजसेनाऽधिपतौ सम्मानप्रदर्शनार्थमिति भावः, दण्डिभिः,—याष्टीकैः, सेनापतेः शरीररक्षिभिः सैनिकैरिति यावत्, उत्सार्य्यमाणजानपदः,—उत्सार्य्यमाणाः,—अपसार्य्यमाणाः जानपदाः,—जनपदाः, पुरः समागता इति भावः यस्मात् यस्य वा तथोक्तः। [“उत्सार्य्यमाणजानपदः” इत्यत्र “उत्सार्य्यमाणजनपदः” इति पाठोऽपि स एवार्थः, “अथ जनपदो जानपदेऽपि जनदेशयोः” इति मेदिनीवचनात् ]।

(३२४) पदे पदे प्रणमतः प्रतिदिशमिभभिषग्वरान् वर-वारणानां विभावरीवार्त्ताः पृच्छन्, (३२५) उच्छ्रितशिखि-पिच्छलाञ्छितवंशलतावनगहनगृहीतदिगायामैः विन्ध्यवनैः इव (३२६) वारणबन्धविमर्दोद्योगागतैः पुरःप्रधावद्भिः अनायत्तमण्डलैः आधोरणगणैश्च, (३२७) मरकतहरित-घासमुष्टीश्च दर्शयद्भिः, नवग्रहगजपतीश्च प्रार्थ्यमानैश्च,

(३२४) पदे पदे—प्रतिपदमेवमित्यर्थः। प्रतिदिशं—दिशि दिशि, चतसृभ्य दिग्भ्य समागतान्,चतुर्दिगवस्थितान् वा इति भावः इभभिषग्वरान्—गजवैद्यप्रवरान्, वरवारणानां—श्रेष्ठगजानां, विभावरीवार्त्ताः,—रात्रिवृत्तान्तान्, रात्रौ ते कीदृशा आसन् इत्यादिप्रकारान्नित्यर्थः, पृच्छन्—जिज्ञासमानः, रात्रिवृत्तजिज्ञासया गजेन्द्रचक्रादिनचर्य्याकृतम् आप्रदोषं तस्य सम्यक् ज्ञातमेवेति गम्यते, एतेन चास्य स्वकार्य्यकर्माणि अनौदासीन्य प्रकटीकृतम्।

(३२५) उच्छ्रितेति।—उच्छ्रितानि—उन्नतानि, शिखिनां—मयूराणां पिच्छैः,—बर्हैः, लाञ्छितानि च—मण्डितानि च वंशलतावनानि—वेणुवल्लीकाननानि मयूराणां सर्वदा तत्र सञ्चारादिति भावः येषु तथाविधैः, गहनैः,—अरण्यैः, गृहीता,—अधिकृता, व्याप्ता इत्यर्थः, दिशां—ककुभाम्, आयामा —आभोगा यैः तादृशैः, विन्ध्यवनैरिव—विन्ध्याचलकाननैरिव, परिदृश्यमानैरिति शेषः, कृष्णवर्णोन्नतदेहत्वात् निविड-श्मश्रुादिधारित्वाच्चेति भावः।

(३२६) वारणेति।—वारणानां—हस्तिनां बन्धे—धारणे रोधने इति यावत्, बन्धाय इति वा यो विमर्दः,—प्रयासः, तस्य उद्योगात्—उपक्रमात्, उद्योगाद् वा, आगता,—उपस्थिता ते, हस्तिनां वशीकरणार्थं सङ्ग्रहार्थं वा दूरान्तरात् समागतैरिति समुदितार्थः, पुरः,—अग्रतः, प्रधावद्भिः,—प्रद्रवद्भिः, अनायत्तमण्डलैः,—न आयत्त—वशीभूत, मण्डल—सङ्घ येषां तैः, अनधीनानुचरैरित्यर्थः, अचिरागमनादिति भावः, ["अनायत्तमण्डलैः" इत्यत्र "अनायतमण्डलैः" इति पाठे—अनायत—न दीर्घ मण्डल—सङ्घः गमनादव्यवस्था येषां तथाविधैः, सम्भ्रमविपर्यस्तपरिच्छदैरिति इति भावः] आधोरणगणैः,—निषादिगणैः, हस्तिपालकवृन्दैरित्यर्थः, ("आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः)।

(३२७) मरकतेति।—मरकतवत्—तदाख्यहरिद्वर्णमणिवत्, हरितानां—श्यामलानां, घासानां—यवसानां, मुष्टीः,—कवलान्, मुष्टिगृहीतघासानित्यर्थः, दर्शयद्भिः,—इक्षयद्भिः, इदृशी घासमुष्टीर्दातुं भक्षते न वा इति जिज्ञासुभिरिति भावः।

(२२८) लब्धाभिमतमत्तमातङ्गमुदितमानसैश्च सुदूरम् उपसृत्य नमस्यद्भिः, (२२९) आत्मीयमातङ्गमदागमांश्च निवेदयद्भिः, डिण्डिमाधिरोहणाय च विज्ञापयद्भिः, (२३०) प्रमादपतितापराधापहृतद्विरददुःखहतदीर्घश्मश्रुभिः अग्रतो गच्छद्भिः, (२३१) अभिनवोपस्थितैश्च कर्पटिभिः वारणासिसुखप्रत्याशया धावमानैः गणिकाऽधिकारिगणैः,

---

गवात।—नव,—नूतन, ग्रह,—ग्रहण धारणमित्यर्थ तेषां लाइसा, ये गजपतय,—प्रधानहास्तक तान् प्रार्थयमान —एतान वन्यकरीन्द्रान भिदणाय अस्मदर्पितान् कुवात याचमानै इत्यर्थ।

(२२८) लब्धेति।—लब्धा,—प्राप्ता, पाल्यलनात भाव, अभिमता —इष्टा, प्रार्थिता इति भाव मत्ता,—मदोत्कटा, मातङ्गा —हास्तन, तै हेतुभि मुदितानि —हृष्टानि मानसानि—मनांसि यषां तै अत एव सुदूर दूरत एव सम्भ्रमात् ध्यादिति भाव, नमस्यद्भि —प्रणिपतद्भि। ["नमोवरिवश्चित्रङ क्यच" (३।१।१९ पा०) इति क्यच्‌प्रत्ययात् शतृप्रत्यय ]।

(२२९) आत्मीयेति।—आत्मीया,—स्वाधिकृता इति यावत, ये मातङ्गा,—गजा तषा मदागमान्—दानवारिस्रावसञ्चारान्, निवदयद्भि —विज्ञापयद्भि तेषां कस्मिंश्चि नियोज्याय स्थापयद्भि इति भाव। डिण्डिमाधिरोहणाय—गजस्योपरि पटहवादिनविधानाय इत्यर्थ।

(२३०) प्रमादेति।—प्रमादेन—अनवधानतया, पतितं—पतन हस्तिपृष्ठादिति, विषममार्गे चालनात स्खलन इति वा भाव, [ भावे क्तप्रत्यय ] तदेव अपराध —दोष तेन हेतुना, अनुगुक्तोऽयं हस्तिचालनायेति धिया इति भाव यद्वा —प्रमादात्—अनवधानात हस्तिपालने अवहेलनादिति यावत, पतित —उपस्थित सञ्जात इत्यर्थ, य अपराध तेन हेतुना, हस्तिपालन अनुयुक्तोऽयमिति धिया इति भाव अपहृत,—आच्छिद्य नीत इत्यर्थ, यो द्विरद,—गज स्वाधिकृत इति भाव तस्य दुःखेन—कष्टेन तदपहरणजनितेन इति भाव हतानि—खण्डितानि इत्यर्थ दीर्घाणि—प्रलम्बानि, श्मश्रूणि—कूर्चा य तथाभूतै।

(२३१) अभिनवोपस्थितै —अल्पदिनमागतै, कर्पटिभि —जीर्णखण्डवसनधारिभि, वारणेति।—वारणस्य—गजस्य, आप्तौ—लाभ यत् सुखम्—आनन्द, तस्य प्रत्याशया—लाभेच्छया, धावमानै —द्रवद्भि गणिकाधिकारिगणै,

(३३२) चिरलब्धान्तरैः उच्छ्रितकरैः कर्मण्यकरेणुका-सङ्कथनाकुलैः, (३३३) उल्लासितपल्लवचिह्नाभिः अरण्य-पालपङ्क्तिभिश्च निष्पादितनवग्रहनागनिवहनिवेदनोद्यताभिः उत्तम्भिततुङ्गतोत्त्रवनाभिः, (३३४) महामात्रपेटकैश्च प्रकटितकरिकर्मचर्मपुटैः, (३३५) अभिनवगजसाधन-

—गणिका—धूर्ती गजाना प्रलोभनार्था हस्तिनीत्यर्थ, यया प्रलोभ्य हस्तिनो ध्रियन्ते इति भाव ("गणिका यूथीवेश्याभीतकारीषु—"इति मेदिनी) तस्या अधिकारिगणा,—अध्यक्षवर्गा तै ।

(३३२) चिरलब्धान्तरै—चिरेण—दीर्घकालानन्तरमित्यर्थ, लब्ध—प्राप्तम्, अन्तरम्—अवकाश, करेणुकावार्ताविज्ञापने स्कन्दगुप्तदर्शने वा इति भाव यै तथोक्तै, उच्छ्रितकरै,—उद्धृतहस्तै करेणुसान्त्वनाय स्कन्दगुप्ते सम्मानप्रदर्शनाय वा इति भाव । कर्मण्येति ।—कर्मण्या—करिग्रहणकुशला या करेणुका—हस्तिनी, तस्या सङ्कथने—समालपने, आकुला—व्यापृता तै गजसेनापतिना सह करेणुविषयकालापपरैरित्यर्थ ।

(३३३) उल्लासितेति ।—उल्लासिता,—उद्धृता पल्लवा एव—किसलयान्येव, चिह्नानि—लक्षणानि, वयमारण्यपाला इति सूचकानीति भाव याभि तथोक्ताभि, निष्पादितेति ।—निष्पादित,—सम्पादित, य नवग्रहण—नवधृताना, नागाना—गजाना निवह—समूह, तस्य निवेदने—विज्ञापने उद्यताभि—प्रवृत्ताभि, उत्तम्भितेति ।—उत्तम्भितम्—उल्लासित तुङ्गम्—उन्नत, तुदति अनेनेति तोत्त्र—वैणुक, हस्तिशासनदमदण्डविशेष इति भाव ("तोत्त्र वैणुकम्" इत्यमर) ['दाम्नी—' (३।२।१८२ पा०) इत्यादिना ष्ट्रन "तितुत्र—" (७।२।९ पा०) इत्यादिना इडभाव] तदर्थं वनम्—अरण्यजात दारु इत्यर्थ याभि तथोक्ताभि, यद्वा,—उत्तम्भितानि—ऊर्ध्वमुत्तोलितानि तुङ्गतोत्त्रवनानि—अत्युच्चवैणुकारण्यानि, प्रभूतत्वादिति भाव याभि तादृशीभि अरण्यपालपङ्क्तिभि—गजबन्धनार्थं वनरक्षिवर्गैरित्यर्थ ।

(३३४) प्रकटितेति ।—प्रकटितानि—आविष्कृतानि, प्रदर्शितानीत्यर्थ करिणा—हस्तिना, कर्मणि—युद्धादिष्विचारे इत्यर्थ, चर्मपुटानि—चर्मनिर्मिता हस्त्याकारा यै तथोक्तै महामात्रपेटकै,—हस्तिपकाधिपकदम्बकै, प्रधानहस्तिपकवृन्दैरित्यर्थ, ("महामात्र समृद्धे चामात्ये हस्तिपकाधिपे" "पेटक पुस्तकादीना मञ्जूषाया कदम्बके" इत्युभयत्र मेदिनी) ;

(३३५) अभिनवेति ।—अभिनव—नूतन, गजाना—करिणा, साधन—वशी-

सञ्चरणवार्त्तानिवेदनविसर्जितेषु नागवनवीथीपालदूतवृन्दे, (२३६) प्रतिक्षणप्रत्यवेक्षितकरिकवलकूटे कटभङ्गसङ्घे ग्रामनगरनिगमेषु निवेद्यमाने (२३७) कटककदम्बकैः क्रियमाणकोलाहले, (२३८) स्वामिप्रसादसम्भृतेन महाऽधिकाराविष्कारेण स्वाभाविकेन च अवष्टम्भाभोगेन उदासीनोऽप्याद्रियमाण इव, (२३९) असङ्ख्यकरिकर्णशङ्खसम्पत्सम्पादनाय

---

करेण तस्मै सञ्चरणं—सम्प्रयोगः तस्य वार्त्ता निवेदनाय—वृत्तान्तज्ञापनाय तान् ग्रामान् गजान् वशीकृत्य प्रवृत्ताऽस्म इत्यादिसंवादनिवेदनाय इति भावः विसर्जिते,—प्रेषिते केनचित् अरण्यानीरक्षाध्यक्षेण इति भावः नागेति।—नागानां—हस्तिनां वनवीथी—अरण्यश्रेणी तस्याः पालाः—अध्यक्षाः तेषां दूतवृन्दे—वार्त्तावहनिवहे।

(२३६) प्रतिक्षणेति।—प्रतिक्षणं—क्षणे क्षणे मुहुर्मुहुरिति यावत् प्रत्यवेक्षितानि—परिदृष्टानि करिणां—गजानां कवलकूटानि ग्राससमूहा येन तथाभूते ग्रामनगरनिगमेषु—ग्रामः—संवसथः नगरादल्पसङ्ख्यकजनवसतिस्थानमित्यर्थः नगरं—बहुजनवासभूतं सदनं स्थानं निगमः—पुरं तेषु ("वणिक्पथः पुरं वेदो निगमाः" इत्यमरः) कटभङ्गसङ्घे—हस्त्याहारशस्यसञ्चये प्रत्यग्रोद्भूतादसङ्ख्यानात् यावत् करिणां भोजनार्थमिति भावः ("कटभङ्गस्तु शस्यानां हस्तच्छेदे नृपात्यये" इति मेदिनी) निवेद्यमाने,—विज्ञाप्यमाने राजद्वारे ग्रामपतीनां श्रमं मुञ्चामहे इति भावः एतेन प्रतारणबलेन चौर्यादिभिः स्वप्रजादीनामप्यानयनं कृषाणपीडनम् इति सूच्यते।

(२३७) कटककदम्बकैः—कटकाः—हस्तकम्मानयुक्ताः तेषां कदम्बकानि—वृन्दानि तैः क्रियमाणेति—क्रियमाणः—विधीयमानः कोलाहलः,—कलरवः यस्य स यथा स्यात् तथैव स्वस्वाधिकारसिद्धये कोलाहलं कृतम् इति भावः। इह यथा महत्सु वने रिक्षितिविमर्दशनात् स्वभावोक्तिरलङ्कारः।

(२३८) स्वामीति।—स्वामिनः—प्रभोः प्रसादः—अनुग्रहः तेन सम्भृतः—जनितः तेन, महेति।—महाऽधिकारस्य—उन्नतपदस्य गजसेनाध्यक्षताऽऽस्पदस्य इति भावः आविष्कारेण—प्रकटनेन स्वाभाविकेन—स्वतः सिद्धेन अवष्टम्भाभोगेन—गर्वोत्कर्षेण गाम्भीर्यभरेण इत्यर्थः वा उदासीनोऽपि—मध्यस्थोऽपि किञ्चिदनादृतवृत्तिः इत्यर्थः आद्रियमाण इव—आश्राप्यमाण इव जनादिभिरपि प्रभाववदाकाराङ्गितादिना समर्थ्यमान इव अथ अनुजीविभिः इति भावः।

(२३९) असङ्ख्येति।—असङ्ख्यानां—बहूनामित्यर्थः यावत् करिणां—गजानां

समुद्रान् आज्ञापयन् इव, (२४०) शृङ्गारगैरिकपङ्काङ्गराग-सङ्ग्रहाय गिरीन् मुष्णन् इव, (२४१) दिग्गजाधिकारं ककुभाम् ऐरावतमिव अपहरन्, हरहरपदभरनमितकैलासगिरि-गुरुभिः पादन्यासैः गुरुभारग्रहणगर्वमुर्व्याः संहरन्निव,

कर्णेषु—श्रवमूलेषु इत्यर्थ, या शङ्खा,—कम्बव एव शङ्खनिर्मितालङ्कारा एवेत्यर्थं, सम्पद,—भूषणानीति भाव तासा सम्पादनाय—सङ्ग्रहाय, समुद्रान—सागरान, आज्ञापयन् इव—आदिशन् इव, इालकर्णशोभासम्पादनाय नूनं स्वगर्भस्थितान शङ्खान उद्धृत्यानेतु समुद्रानपि आज्ञापयन्निव इति भाव। एतेन तस्य समुद्रेभ्योऽपि गाम्भीर्यवत्त्व सूचितम्। असङ्ख्येयाना करिणा कर्णेषु एवात्यत्य शङ्खराजय तेन विनि वशिता यथा समुद्रगभास्थिता शङ्खानवहा निःशेषा एवाभूवन्नित्युत्प्रेक्षितम।

(२४०) शृङ्गारेति।—शृङ्गार —गजमण्डन, हस्तिनामलङ्करणार्थमित्यर्थं, [ शृङ्गार सुरते नाट्यरसे च गजमण्डने" इति मेदिनी। 'शृङ्गार भृङ्गारौ" (उ० २ पा० १२६ सू०) इति शृधातो आरन् नुम् गुक् ह्रस्व च रूपम्] य, गैरिकपङ्क,—गैरिकद्रव, स एव अङ्गराग —गजानामङ्गरञ्जनार्थं लेपविशेष, तस्य सङ्ग्रहाय—सञ्चयाय, गिरीन—पर्व्वतान मुष्णन इव—अपहरन इव, गैरिकाणीति शेष गजाङ्गरागसम्पादनाय गिरिरपि गैरिकवर्थीकारि इति भाव, एतेन तस्य पर्व्वतादपि देहदाढ्यं सूचितम्। सर्व्वत्र गजानामतिशयद्योतनाय एवमुत्प्रेक्षेति ज्ञेयम्।

(२४१) ककुभा—दिशा, दिग्गजाधिकार—दिग्गजाधिकारित्व, सर्व्वदिग्गजश्रेष्ठ-मित्यर्थ ऐरावतम्—अभ्रमातङ्ग पूर्वदिग्गजमिति यावत, अपहरन्निव—मुष्णन इव, गजवीर्य्येण तत्सम्पदा च ऐरावतमपि अतिक्रामन्निवेत्यर्थ, यद्वा —केवलमष्टगजाधिकारित्व मैरावतम असङ्ख्यगजेन्द्राधिकारप्रदर्शनेन न्यक्कुर्वन इव इत्याशय। हरेति।—हरस्य —शिवस्य पदभरेण—चरणभारेण चरणस्थापनरभसेनेत्यर्थ, नमित —आवर्जित, भाराक्रान्ततया अधोगत इत्यर्थ य कैलासगिरि,—कैलासपर्व्वत, तद्वत गुरुभि,—भारवाह पादन्यासै,—पदाक्षेप, हर —वराहरूपिण नारायणस्य इति भाव, उर्व्या —पृथिव्या, गुरुभारग्रहणगर्वे—महाभारोद्वहनाहङ्कार, संहरन्निव—सङ्कोचय न्निव गुरुपादन्यासेन वराहरूपिणो नारायणस्यापि दन्तयो व्यथां जनयन्निवेति भाव। पदभरेण वराहदन्तस्यापि नमनोत्प्रेक्षणादस्य महासारवत्त्व सूचितम। इत्योर्व्वीनमनेन भगवत वराहस्यापि दन्तावनमन समुत्प्रेक्षितम्, अपि चोपमेयस्योत्कर्षदर्शनात व्यतिरेकोऽपि व्यज्यते।

(२४२) गतिवशविलोलस्य च आजानुलम्बस्य बाहुदण्डद्वयस्य विक्षेपैः आलानशिलास्तम्भमालामिव उभयतो निखनन्, ईषदुत्तुङ्गलम्बेन अधरबिम्बेन अमृतरसस्वादुना नवपल्लवकोमलेन कवलेन इव श्रीकरेणुकां विलोभयन्, (२४३) निजनृपवंशदीर्घां नासावंशं दधानः, अतिस्निग्धमधुरधवलविशालतया पीतक्षीरोदेन इव पिबन् ईक्षणयुगमायामेन दिशाम् आयाम, (२४४) मेरुतटादपि विकटविपुलालिकं, सततम्

---

(२४२) गतीति।—गतिवशेन—गमनवशेनेत्यर्थः विलोलस्य—चञ्चलस्य। विक्षेपैः—सञ्चालनैः आलानेति।—आलानानि—गजबन्धनानि गजबन्धनार्था इत्यर्थः, ये शिलास्तम्भाः—पाषाणस्थूणाः तेषां मालामिव—श्रेणिमिव उभयतः—उभयोः पार्श्वयोः निखनन्—प्रोथयन् पाषाणकठिनप्रलम्बभुजशालीति भावः। ईषदुत्तुङ्गलम्बेन—अल्पोन्नतलम्बिना अमृतेति—अमृतरसवत्—सुधाऽऽस्वाद इव स्वादुना—सुरसेन सरसेन शोभीलोभनीयेन वा इति भावः नवेति।—नवपल्लववत्—अभिनवोद्गतकिसलयवत् कोमलेन—सुकुमारेण मृदुना च अधरबिम्बेन—बिम्बोष्ठेन एतेन अधरस्य आरक्तत्वमपि सूचितम् कवलेनेव—ग्रासेनेव श्रीकरेणुकां—राज्यश्रीहस्तिनीं हस्तिपक्षे हस्तिनी मति यावत् विलोभयन्—आकर्षयन्।

(२४३) निजेति।—निजः—स्वीयः नृपवंशः—राजकुलं तस्य राजवंशसम्भूतत्वात् भावः तद्वत् दीर्घम्—आयतम् इत्युपमितसमासाश्रयणात् आर्थीयमुपमाऽलङ्कारः स्वकीयवंश सुदीर्घ आसीत् इत्यावेदयितुमिव सुदीर्घा नासिका धृतवानिति भावः नासावंशं—नासिकादण्डम्। अतीति।—अतिस्निग्धम् अतिकोमलं स्निग्धं मधुरं—मनोहरं धवलं—शुभ्रं विशालम्—आयतं तस्य भावः तत्ता तया पीतक्षीरोदेन दुग्धसागरपायिना ईक्षणयुगमायामेन—नेत्रयुगलायामेन। आयामं—दैर्घ्यं पिबन् इव—ग्रसन्निव आयतनेत्र इति भावः।

(२४४) मेरुतटादपि—सुमेरुतटादपि सुमेरोरुन्नतत्वादपीत्यर्थः विकटेति।—विकटम्—अत्यन्तं विपुलं—विशालम् अलिकं—भालदेशः ललाटतटम् इत्यर्थः यस्य तथाभूतः ("ललाटमलिकं गोधिः" इत्यमरः)।

(२४५) अविच्छिन्नच्छत्रच्छायाप्ररूढ़िमशादिव नितान्तायत-नीलकोमलच्छविसुभगेन स्वभावभङ्गुरेण कुन्तलवाल्लवल्लरी-वेल्लितविलासिना लुनन्निव लुप्तालोकान् अर्ककरान् बर्बरकेण, (२४६) अरिपक्षपरिचयपरित्यक्तकार्मुककर्माऽपि सकलदिगन्त-श्रूयमाणगुरुगुणध्वनिः, आत्मस्थसमस्तमत्तमातङ्गसाधनोऽपि

(२४५) अविच्छिन्नेति।—अविच्छिन्ना—विच्छेदरहिता, या छत्रच्छाया—आतप-त्रेण सौरतापावरणम् इत्यर्थः, ["विभाषा सेना—" (२।४।२५ पा०) इत्यादिना क्लीवत्वस्य पाक्षिकत्वात् अत्र तदभावः] तस्याः प्ररूढ़िः,—आतिशय्यं, मुहूर्त्तमपि छत्रशून्यतया अनवस्थानमित्यर्थः, तद्वशादिव—तत्सम्पर्कादिवेत्यर्थः, नितान्तेति।—नितान्तम्—अत्यन्तम्, आयता—दीर्घा, नीला—कृष्णा, कोमला—अकर्कशा, स्निग्धा इत्यर्थः, सुखस्पर्शा इति भावः, या छविः,—कान्तिः, तया सुभगः—रम्यः तेन, आतपसम्पर्कजनितरूक्षता-ऽभावादिति भावः, स्वभावभङ्गुरेण—सहजभङ्गिमता, स्वत एव कुञ्चितेनेत्यर्थः ["भञ्जभास-मिदो घुरच्" (३।२।१६१ पा०) इति घुरच्] कुन्तलेति।—कुन्तलाः,—केशाः, लम्बमानाः कतिपयकेशगुच्छा इति भावः वाल्लवल्ल्य इव—नूतनमञ्जर्य्य इव, तासां वेल्लितेन—स्फुरणेन, विलसति—उल्लासते इति तथोक्तेन, बर्बरकेण—केशेन, केशवन्धेन इत्यर्थः ("बर्बरं पामरे कर्मे चक्रले नीवृदन्तरे" इति मेदिनी) लुप्तालोकान्—लुप्ताः,—विनष्टाः, आलोकाः—उद्द्योता येषां तान् अर्ककरान्—सूर्य्यमयूखान्, लुनन्निव—खण्डयन्निव, कुञ्चितगाढ़कृष्णकेशपाशेन सूर्य्यकिरणान् मलिनयन्निवेत्यर्थः।

(२४६) अरीति।—अरिपक्षाणां—शत्रुसहायानां परिचयेण—अनुगमनाशेन, परित्यक्तम्—उत्सृष्टं, कार्मुककर्म—धनुराकर्षणादिकं येन तथाभूतोऽपि, न चासामर्थ्या-दौदासीन्याद्वा इत्याशयः, सकलेति।—सकलेषु—सर्व्वेषु, दिगन्तेषु—आशाप्रान्तेषु, श्रूयमाणः—आकर्ण्यमानः गुरुः—महान् गुणानां—शौर्य्यादीनाञ्च ध्वनिः,—शब्दः यस्य तथाभूतः, अत्र परित्यक्तकार्मुककर्म्माऽपि श्रूयमाणगुरुगुणध्वनिः इति आपाततः विरोधः, स च शौर्य्यादिगुणध्वनिश्रवणरूपार्थान्तरपर्य्यवसानात् इति विरोधा-भासोऽलङ्कारः। आत्मस्थेति।—आत्मस्थानि—आयत्तानि, स्वाधिकृतानीति यावत्, समस्ताः,—सर्व्वे मत्तमातङ्गाः—मदोत्कटगजा एव, साधनानि—सैनाङ्गानि यस्य तथाभूतोऽपि, आत्मस्थानि समस्तमत्तमातङ्गसाधनानि—निखिलमदस्रावदिग्गजारोहिसैन्यानि

(३५१) उभयकरकमलावलम्बितं स्पृशन् मौलिना महीतलं नमस्कारम् अकरोत्।

उपविष्टं (३५२) नातिनिकटे तं तदा जगाद देवो हर्षः,—"श्रुतो विस्तर एव अस्य आर्यव्यतिकरस्य अस्मच्चिकीर्षितस्य च; अतः शीघ्रं प्रवेश्यन्तां प्रचारनिर्गतानि गजसाधनानि। न क्षाम्यति अतिस्वल्पम् अपि आर्यपरिभवपीडापावकः प्रयाणविलम्बम्" इत्येवम् अभिहितश्च प्रगल्भ्य व्यज्ञापयत्,—(३५३) "कृतम् अवधारयतु स्वामी समादिष्टं किन्तु स्वल्पं

---

क्रीतः—क्रयेण निष्पन्नः दासः,—सेवकः, स न भवतीति, [नञ्समासः] भृतिमगृहीत्वाऽपि सता परिचर्याविधौ निरत इत्यर्थः।

(३५१) उभयेति।—उभाभ्याम्—द्वाभ्याम्, ["उभादुदात्तो नित्यम्" (५।२।४४ पा०) इति सूत्रस्य योगविभागमाश्रित्य, "उभशब्दात् वृत्तिविषये नित्यमयच् स्यात् स्वार्थे" इत्युक्तं तत्त्वबोधिनीकारैः, एवञ्च समासे उभशब्दस्य उभयरूपत्वे परिणतिरिति सूक्ष्ममालोचनीयम्] करकमलाभ्याम्—पाणिपद्माभ्याम्, अवलम्बितम्—धृतम्, महीतलम्—भूतलम्। मौलिना—शिरसा।

(३५२) नातिनिकटे—अनतिदूरे इत्यर्थः। आर्यव्यतिकरस्य—आर्यव्यसनस्य, तस्य गुप्तहत्याया इत्यर्थः ("अथ व्यतिकरः पुंसि व्यसन-व्यतिषङ्गयोः" इति मेदिनी) अस्मच्चिकीर्षितस्य—अस्माभिः कर्तुमिष्टस्य च, विस्तरः, वाक्प्रपञ्चः ["स च शब्दस्य विस्तरः" इत्यमरोक्तेः "ऋदोरप्" (३।३।५० पा०) इत्यप्]। प्रचारनिर्गतानि—प्रचारात्—सञ्चरणात्, ग्रामनिगमादौ भक्ष्यसङ्ग्रहार्थे, वन्यकरिग्रहणार्थे वा इति भावः, निर्गतानि—निष्क्रान्तानि गजसाधनानि—करिसैन्यानि प्रवेश्यन्ताम्—आनीयन्ताम्, राजधानीमिति शेषः, युद्धयात्रार्थमिति भावः, यद्वा—प्रवेश्यन्ताम्—रणभूमौ प्रेर्यन्तामिति भावः। आर्येति।—आर्यस्य—ज्येष्ठस्येत्यर्थः परिभवेण—तिरस्कारेण अग्रजस्य हननेनेत्यर्थः, या पीडा—व्यथा, सैव पावकः,—अग्निः, प्रयाणविलम्बम्—युद्धयात्राकालातिक्रमणम्, न क्षाम्यति—न सहते ["शमामष्टानां दीर्घः श्यनि" (७।३।७४ पा०) इति दीर्घः]।

(३५२) स्वामी—प्रभुः, भवानिति शेषः, समादिष्टम्—आज्ञप्तम्, भवता यत् इति शेषः, तत्, कृतम्—सम्पादितमेव, अस्माभिरिति शेषः, इति अवधारयतु निश्चि-

विज्ञप्यमस्ति भर्तृभक्तेः; तत् आकर्णयतु देवः,—देवेन हि पुष्पभूतिवंशसम्भृतस्य अजात्यस्य सहजस्य तेजसः, दिक्करिकरप्रलम्बस्य बाहुयुगलस्य, असाधारणस्य च सोदरस्नेहस्य सर्वं सदृशम् उपक्रान्तम्। काकोदराभिधानाः कृपणाः कृमयोऽपि न मृष्यन्ति विकारं, किमुत भवादृशाः तेजसां राशयः? केवलं (२५४) देवराज्यवर्द्धनोदन्तेन कियदपि दृष्टमेव देवेन दुर्जनदौरात्म्यम्। ईदृशाः खलु लोकस्वभावाः, प्रतिग्रामं प्रतिनगरं प्रतिदेशं प्रतिद्वीपं प्रतिदिशञ्च भिन्ना वेशाश्च आकाराश्च

---

नीतु, भवदाज्ञा अपरिहार्य्यैव, तेनेदानीमकृतमपि कृतमेव तदित्यवधारयतु स्वामी इति तात्पर्य्यम्। भर्तृभक्तेः,—स्वाम्यनुरागाद्धेतोः। अजात्यस्य—जातौ भव जात्यं, तन्न भवतीति तथोक्तस्य सर्वथजात्यतिशायिन इति भावः। सहजस्य—स्वाभाविकस्य, प्रकृतिसिद्धस्य इत्यर्थः। दिगिति।—दिक्करिणां—दिग्गजानां, करवत्—शुण्डादण्डवत्, प्रलम्बस्य—दीर्घस्येत्यर्थः, आजानुलम्बितस्येति भावः। सदृशम्—अनुरूपम्, उपक्रान्तम्—आरब्धम्। काकोदराभिधानाः,—भुजङ्गनामानः ("...भुजगोऽहिर्भुजङ्गमः। ... काकोदरः फणी" इत्यमरः) कृपणाः,—दुर्बलाः, कृमयोऽपि,—कृमिसदृशाः कीटविशेषा अपि, विकारं—परपरिभवं, न मृष्यन्ति—न क्षाम्यन्ति, न सहन्ते इत्यर्थः, अत्र भुजङ्गानामपि दुर्बलकीटविशेषत्वाभिधानेन अस्य महातेजस्वित्वं प्रकटितम्। किमुत—किं पुनः, भवादृशानां तादृशापकारासहने वक्तव्यमेव नास्तीत्याशयः।

(२५४) देवेति।—देवस्य—राज्ञः, राज्यवर्द्धनस्य उदन्तेन—उत—उद्गतः, अन्तः,—निर्णयो यस्मात् तादृशेन, वृत्तान्तेन इत्यर्थः, ("वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः) देवेन—राज्ञा, भवता इति भावः, दुर्जनदौरात्म्यं—दुर्जनानां—खलानां, दौरात्म्यं—दुष्टता, कियदपि—अल्पमात्रमित्यर्थः, अपिरत्र सम्भाव्यार्थकः कथश्चेयम्, ("अपि पदार्थसम्भाव्यगर्हाऽनुज्ञासमुच्चये" इत्युक्तेः) दृष्टं—ज्ञातमित्यर्थः। लोकस्वभावाः,—जनानां प्रकृतयः, खलु—निश्चये, ईदृशाः—एवंविधाः, दौर्जन्यप्रधाना इति भावः। प्रतिग्रामं—"विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि। स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा॥" इत्युक्तलक्षणः विप्रादीनां वासस्थानं ग्रामः। ग्रामे ग्रामे इत्यर्थः, ("अव्ययम्—" (२।१।६ पा०) इत्यादिना वीप्सायां

(३५९) स्वप्नायमानस्य च मन्त्रभेदोऽभूत् मृत्यवे मृत्तिकावत्यां स्वर्णचूडस्य। (३६०) चूडामणिलग्नलेखप्रतिबिम्बवाचिताक्षरा च चारुचामीकरचामरग्राहिणी यमतां ययौ यवनेश्वरस्य। (३६१) लोभबहुलस्य बहुलनिशि निधानम् उत्खनन्तम्

---

श्री,—लक्ष्मी, व्यशीर्यत—व्यनश्यत, शुकमुखेन मन्त्रभेदात् इत्याशय। अत्र शुके-त्यादिवाक्यस्थपदजातेषु शकारस्यासकृदावृत्त्या इत्यनुप्रास। पुरा श्रावस्तीश्वरो श्रुत-वर्माऽपि पूर्ववत् शुकमुखात् विभिन्नमन्त्रो राज्यभ्रष्टोऽभूदिति वार्त्ता। एतेन शास्त्रान-दर्शनेन विजिगीषुणा यत्नात् गूढमन्त्रेण भाव्यमित्युक्तम्।

(३५९) स्वप्नायमानस्य—स्वप्न,—स्वप्नवान्, स इव आचरत, निद्रितावस्थया गुप्त-मन्त्रं प्रकाशयत इत्यर्थं, इत्यदोषत्वादुरस्वप्नायमानस्य इति भाव, स्वर्णचूडस्य—तदाख्यस्य राज्ञ, मृत्तिकावत्या—तदाख्याया नगर्य्या, मन्त्रभेद,—रहस्यप्रकाश, मृत्यवे—निधनाय, निधनकारणमित्यर्थं, अभूत्। पुरा मृत्तिकावत्यां नगर्य्यां स्वर्णचूडो नाम राजा कश्चित् विश्रम्भपूर्वक जिघृक्षन् मन्त्रितवान्, तदेव तस्य निद्रितावस्थायां शुस्फोर। तच्च अवगम्य प्रणिप्रयुक्तेन केनचित् एतच्छिरोरक्षकेण भूत्वा असौ निधनं आपादित इति वार्त्ता। अनेन अज्ञातकुलशीलो मन्त्री न नियोज्य इत्युक्तम्।

(३६०) चूडामणीति।—चूडामणि,—शिरोरत्न, तत्र लग्न—संक्रान्त, यत् लेखप्रतिबिम्ब—लिपिप्रतिच्छाया, तेन वाचितानि—पठितानि इत्यर्थं, अक्षराणि—वर्णा, लेखस्थानि इति शेष यया तथाभूता, चूडामणिप्रतिफलितलेखाक्षराणि पठन्तीति भाव, चारुचामीकरचामरग्राहिणी—मनोहरकाञ्चनदण्डचामरव्यजनहस्तेत्यर्थं, तादृशेन चामरेण वीजयन्तीति भाव, यवनेश्वरस्य—यवनाधिपस्य, यमता—मृत्युता, ययौ—प्राप। पुरा यवनेश्वर केनचित् मृत्युना आपादयितुमिष्ट इति स्वसुहृदा तद्वृत्तान्त लेखेन बोधित, लेखपृष्ठे च तत्र लिखित, स्वय वाचयितव्यमिति। तच्च लेख स्वय वाचयत यवनेश्वरस्य चूडामणिप्रतिबिम्बितानि अक्षराणि प्रणिप्रयुक्ता काचित् चामरग्राहिणी निगूढ वाच-यित्वा स्वस्वामिने सर्वं व्यज्ञापयत्, तत तेनोपजप्ता सा निभृत त जघान इति वार्त्ता। अनेन स्त्रीष्वपि मन्त्रभेदोपाय परिहर्त्तव्य इति सूचितम्।

(३६१) लोभेति।—लोभबहुलम्—अतिलुब्ध, बहुलनिशि—कृष्णपक्ष-

उत्खातखड्गप्रमाथिनी ममन्थ माथुरं बृहद्रथं विदूरथवरूथिनी। (३६२) नागवनविहारशीलञ्च मायामातङ्गाङ्गात् निर्गता महासेनसैनिका वत्सपतिं न्ययंसिषुः। (३६३) अतिदयितलास्यस्य च शैलूषमध्यमध्यास्य मूर्द्धानम् असिलतया मृणालमिव अलुनात् अग्निमित्रात्मजस्य सुमित्रस्य मित्रदेवः।

रजन्या निधाने—भूगर्भस्थित रत्नम्, उत्खननम—उद्धरणं, माथुर—मथुराऽधिप, बृहद्रथं—तदाख्य राजानं, विदूरथवरूथिनी—विदूरथस्य—तदाख्यस्य भूयवंशीयराजस्य, वरूथिनी—सेना ("ध्वजिनी वाहिनी सेना । वरूथिनी बलं सैन्यम " इत्यमरः) उत्खातेति।—उत्खातेन—उत्पाटितेन कोषात उद्धृतेन इत्यर्थः खड्गेन—असिना, प्रमथाति—ताडयतीति तथाभूता सती, ममन्थ—जघान। विदूरथमन्त्रितेन गूढप्रयुक्त-राजन्यवृन्देन प्रलोभितो बृहद्रथो नाम राजा कृष्णपक्षनिशायां विदूरथविवादविषयीभूत-खनितो रत्नजातमुद्धर्त्तुं प्रवृत्त तत्सैनिकै निहत इति वार्त्ता। एतेन सुविमृश्य कर्त्तव्यमित्युक्तम्, "सहसा विदधीत न क्रियाम" इत्याद्यासोक्ते।

(३६२) नागेति।—नागाना—गजाना, वन—कानन—[illegible]बहुलमरण्यमित्यर्थः, तत्र विहारे—भ्रमणे शील—स्वभाव यस्य तथाभूतं वत्सपति—वत्सराजम् उदयन मिति यावत महासेनस्य—महासनाह्वयस्य वासवदत्तापितु उज्जयिनीराजस्य, सैनिका,—सैन्यानि मायामातङ्गाङ्गात—मायया—कपटेन रचित मातङ्ग—हस्ती तस्याङ्गम् —अवयव तस्मात्, निर्गता—निःसृता सन्त, न्ययंसिषु,—बबन्धु। पुरा महासेनो नाम उज्जयिनीपति स्वा दुहितर वासवदत्ताम उदयनाय दित्सु अन्तर्निगूढसामन्त माया-मातङ्ग वने सस्थाप्य छद्मप्रयुक्तैश्चरै नागवनविहाराय त प्रलोभितवान सोऽपि गज-व्यसनितया अविचार्य्यैव श्रुतिपथपरिशनपरिहृत वीणा वादयन तत्र गत। ततश्च सिद्धाभिप्राय महासेन मायामातङ्गशरीरान्निर्गतै स्वसैनिकै त निगृह्य स्वगृहमानीय कन्या ददौ इति वार्त्ता। एतेन नाल्पसाधनैः सचौल्य च विश्वसितव्यमित्युक्तम्।

(३६३) अतीति।—अतिदयितम्—अतिप्रिय, लास्य—नृत्य यस्य तथोक्तस्य, अत्यर्थं नृत्यप्रियस्य इत्यर्थ ("लास्य नृत्यञ्च नर्त्तने" इत्यमरः)। शैलूषमध्य—नटमध्य, ("शैलूषो नट वितयो" इति मेदिनी) अध्यास्य—अधिष्ठाय, नटच्छद्मना इति भाव, ["अधिशीङ्स्थासा कर्म" (१।४।४६ पा०) इत्याधारस्य कर्मसंज्ञा]। अलुनात् —चिच्छेद। मित्रदेव,—तन्नामा कश्चित सुमित्ररिपु। पुरा सुमित्रो नाम राजा नृत्यव्यसनी नटजने विश्वस्त मित्रदेवेन नटरूपिणा व्यापादित, तत्र च दीर्घदर्श-

(३६४) प्रियतन्त्रीवाद्यस्य अलाबुवीणाभ्यन्तरशुषिरनिहित-निशिततरवारयो गान्धर्वच्छात्रच्छद्मान विच्छिदुरश्मकेश्वरस्य शरभस्य शिरो रिपुपुरुषाः। (३६५) प्रज्ञादुर्बलश्च बलदर्शन व्यपदेशदर्शिताशेषसैन्य सेनानी अनार्यो मौर्यं बृहद्रथं पिपेष पुष्यमित्रः स्वामिनम्। (३६६) आश्चर्यकुतूहली च चण्डीपति-दण्डोपनतयवननिर्मितेन नभस्तलयायिना यन्त्रयानेन अनीयत

---

प्रयोगतिरोहितवपेष बभूवे इति कथा। अनेन च व्यसनिता प्राकृतजने विश्वस्तता च सर्वथा नोचिता इति प्रकटितम्।

(३६४) अलाब्विति।—अलाबु—तुम्बी तद्रचिता वीणा—विपञ्ची तस्या अभ्यन्तरशुषिरे—मध्यगर्भे निहित—स्थापित निशित—तीक्ष्ण तरवारि—असि र्ये तथोक्ता गान्धर्वच्छात्रच्छद्मान—गान्धर्व—सङ्गीत तस्य छात्रा—शिष्या, तदेव छद्म—कपट येषां तथाभूता वयं भवत्सकाशे गान्धर्वं शिक्षितुमागता इति छलेन समुप स्थिता इति भाव रिपुपुरुषा—शत्रुप्रयुक्ता पुरुषा प्रियेति।—प्रिय—दयितं तन्त्रीवाद्य—वीणावाद्य यस्य तथाभूतस्य तन्त्रीवाद्यप्रियस्येत्यर्थ अश्मकेश्वरस्य—अश्म-काख्यजनपदाधिपस्य शरभस्य—तदाख्यस्य नृपते शिर मूर्धान चिच्छिदु—चकृतु। शरभो नाम राजा वाद्यविद्याविशारदानाम् अवाप्तिदाव प्रवणमनात तैनासौ शिष्यच्छद्मना प्रच्छन्न गूढायुधै शत्रुपुरुषै निहत इति वार्ता। एतेन व्यसना सक्तिलिप्सोऽपि सन्त्यव परिहर्तव्य इति पूर्वाकरव दृढीकृता।

(३६५) बलात।—बलाना—सैन्याना दर्शनम्—अवलोकनमेव, व्यपदेश—छल तेन दर्शितानि—अवलोकितानि अशेषाणि—अतिबहूनि दत्यर्थ सैन्यानि—बलानि, स्वाधिकृतानि इति भाव येन तथाभूत अनार्य—असाधु सेनानी—सेनापत, प्रज्ञाद्दुर्बल—बुद्धिबलहीन मौर्य—मौर्यवंशोद्भव स्वामिन प्रभु बृहद्रथ पिपेष—जघान। एतेन केऽपि न सर्वाधिकारिण कर्त्तव्या इति व्यक्तीकृतम्।

(३६६) आश्चर्येति।—आश्चर्य—विस्मयकरवस्तु तदर्शने इत्यर्थ कुतूहली—कौतुकवान चण्डीपति—चण्डीनाम नगरी तस्या पति—प्रभु दण्डेति। दण्डेन—सङ्ग्रामेण, उपनता—निर्जिता इति यावत ये यवना—तद्देशवासिनो म्लेच्छविशेषा इत्यर्थ त निर्मित—रचित तेन नभस्तलयायिना—आकाशगामिना गगनमार्ग भ्रमणपरायणेन इत्यर्थ, यन्त्रयानेन—विमानादिरथेण, यन्त्रचालितरथेन

क्वापि। (३६७) काकवर्णः शैशुनागिश्च नगरोपकण्ठे कण्ठे निचकृते निस्त्रिंशेन। अतिस्त्रीसङ्गरतम् अनङ्गपरवशं (३६८) शुङ्गम् अमात्यो वसुदेवो देवभूतिदासीदुहित्रा देवीव्यञ्जनया वीतजीवितम् अकारयत्। (३६९) असुरविवरव्यसनिनं चापजङ्घः अपारमितरमणीमणिनूपुरझणझणाह्लादरम्यया मागधं गोधनगिरिसुरुङ्गया स्वविषयं मेकलाधिपमन्त्रिणः।

---

इत्यर्थ, क्वापि—कुत्रापि, अनिर्दिष्टदेशमिति यावत, अनीयत—प्राप्यत अदर्शनं गमित इत्यर्थः। पुरा चण्डीपति यवनान् विजित्य ते उपायनीकृतेन कृत्रिमचितेन यन्त्रयानेन परदारान गच्छेति प्रलोभ्य स्वदेशं नीत्वा व्यापादित इति वार्त्ता। एतेन शत्रुषु तत्प्रदत्तोपायनेषु च न विश्वास विधेय इति प्रकटीकृतम्।

(३६७) शैशुनागि,—शिशुनागाख्यजनपदाधिपति,काकवर्ण,—तन्नामा कश्चिद्राजा, नगरोपकण्ठे—पुरीसमीपे, ("समीपे निकटासन्न। उपकण्ठान्तिकाभ्यर्ण" इत्यमर) निस्त्रिंशेन—खड्गेन, कण्ठे निचकृते—निकृत, चिच्छिदे इत्यर्थ, केनचित् शत्रुणेति शेष।

(३६८) देवीव्यञ्जनया—देवी—राज्ञी एव व्यञ्जनं—छद्म यस्या तथाभूतया, महिषीवेशधारिण्येत्यर्थ, देवभूतिदासीदुहित्रा—देवभूते,—तन्नामप्रसिद्धस्य कस्यचित्, दासी—काचित् परिचारिका, तस्या दुहिता—तनयया, [प्रयोज्यकर्त्तरि तृतीया करोतेः णिचि प्रयोज्यकर्तुः कर्मत्वस्य पाक्षिकत्वादिति ज्ञेयम्] शुङ्ग—तदाख्य नृप, वीतजीवितम् —अपगतजीवनं विनष्टमित्यर्थ। अनेन वनितादिविषयेषु अत्यासक्ति दूरत परिहार्य्या इति बोधितम्।

(३६९) मेकलाधिपमन्त्रिण —मेकलाधिपस्य—तदाख्यपर्व्वतवेष्टितदेशस्वामिन, "मेकलो विन्ध्याद्रि" इति कश्चित,मन्त्रिण,—सचिवा अपरिमितेति।—अपरिमितानां— बहूनां, रमणीनां—नारीणां,मणिनूपुराणां—रत्नमञ्जीराणां,झणझणाह्लाद,—झणत्कार-शब्द, तेन रम्या—मनोज्ञा तया,प्रवणमनुष्यशिञ्जितसुषमयेत्यर्थ, गोधनगिरिसुरुङ्गया— गोधनाख्यपर्वतान्तर्गतविवरवर्त्मना, "गोधनगिरि मूर्थाख्य पर्व्वत" इति कश्चित्, असुरविवरव्यसनिनम्—असुराणां—दानवानां, ["पत्येऽरन्" (उ० १ पा० ४३ सू०) इति उरन्] विवरम्—आवासरन्ध्रं, पातालम् इत्यर्थ, तत्र व्यसनी—कुतू-हलीत्यर्थ त, पातालदर्शनाय प्रलोभितमित्यर्थ, मागधं—मगधराज, स्वविषयं—स्वजन-

राजयक्ष्माणम् अजनयत्। (२७२) स्त्रीविश्वासिनश्च महादेवीगृहगूढभित्तिभाक् भ्राता भद्रसेनस्य अभवत् मृत्यवे कालिङ्गस्य वीरसेनः। (२७३) मातृशयनीयतूलिकातलनिषण्णश्च तनयोऽन्यं तनयम् अभिषेक्तुकामस्य दध्रस्य करूषाधिपतेः अभवत् मृत्यवे। (२७४) उत्सारकरुचिश्च रहसि ससचिवमेव दूरीचकार चकोरनाथं शूद्रकदूतः चन्द्रकेतुं जीवितात्।

---

इति शेषः। गणपतेः—तदाख्यस्य राजपुत्रस्य राजयक्ष्माणम्—क्षयरोगविशेषम्, अजनयत् उत्पादयत् कुभेषजं पाययित्वा इति भावः, एतेन आचार्यादौषधं न पातव्यमित्युक्तम्।

(२७२) स्त्रीविश्वासिनः—नारीषु विश्वासं कुर्वतः कालिङ्गस्य कलिङ्गदेशाधिपस्य भद्रसेनस्य—तदाख्यस्य भ्राता—अनुजः इत्यर्थः वीरसेनः महादेवीति।—महादेव्याः—राजमहिष्याः देवरत्वेन पूर्वमुपभुक्तायाः इति भावः गृहे—केलिमध्ये इत्यर्थः गूढं सुगुप्तं यथा तथा भित्तिं—कुड्यं भजते—आश्रयते इति तथाभूतः सन् मृत्यवे—मृत्युं घटयितुं निधनायेत्यर्थः [“क्रियार्थोपपदस्य—” (२।३।१४ पा०) इत्यादिना चतुर्थी] अभवत् ज्यायांसं भ्रातरं निधनमकरोदिति भावः। एतेन स्त्रीष्वपि विश्वासो नैव कर्तव्य इति व्यञ्जितम्।

(२७३) मातेति—मातुः जनन्याः शयनीयतूलिका—तूलगर्भशयनीयं गद्दी इति वङ्गभाषया प्रसिद्धा तस्याः तले—निम्नदेशे निषण्णः—स्थितः तनयः—पुत्रः कनिष्ठ इति भावः अन्यं तनयम्—अपरपुत्रं ज्येष्ठमिति भावः अभिषेक्तुकामस्य—राज्ये अभिषेक्तुं कामयमानस्य दध्रस्य—दध्राख्यस्य करूषाधिपतेः—करूषजनपदाधिपस्य मृत्यवे—मरणाय अभवत् अजायत निधनमकरोदित्यर्थः पितृहत्यां चकारेति भावः। एतेन राजभिः ज्येष्ठकमपि सर्वप्रथमं परीक्ष्य अभिषेक्तव्यः तथा पुत्रोऽपि नैव विश्वसनीय इति प्रकटीकृतम्।

(२७४) उत्सारकरुचिरिति—उत्सारः—दूरीकरणे रुचिः—अभिलाषो यस्य तथाभूतः शूद्रकनृपदौत्यकर्मनिरतः उत्सारकः द्वारपालः तेन हि प्रभुद्वारतो जनाः दूरीक्रियन्ते इति उच्चैस्तेषां मतान् दर्शनात् दर्शनेन रुचः—भाति यस्य तथाविधः समागतः ... द्वारपालवेशः दूतोऽयं नाम ...,

( २७५ ) मृगयाऽऽसक्तम्य च मथ्नतो गण्डकान् उद्दण्डनड्वलनल-वननिलीनाश्च चम्पाधिपचमूचरभटाः चामुण्डीपतेः आचेमुः प्राणान् पुष्करस्य। ( २७६ ) वन्दिरागपरश्च परप्रयुक्ता जय-शब्दमुखरमुखा मङ्गा मौखरिं मूर्खं क्षत्रवर्माणम् उदखनन्। ( २७७ ) अरिपुरे च परकलत्रकामुकं कामिनीवेशगुप्तश्च

ससचिवं—सन्त्रिसहित, चकोरनाथ—चकोराख्यजनपदाधिप चन्द्रकेतु तदाख्य, शूद्रकदूत,—तदाख्यनृपते वार्त्तावह छिद्रितवृत्तान्त इति भाव, रहसि—विजने, जीवितात—प्राणेभ्य, दूरीचकार—अपसारयामास, निजघान इत्यर्थं । एतेन मन्त्री नैव प्रकाशनीय इति सूचितम्।

( २७५ ) उद्दण्डेति।—उद्दण्डानि—उन्नतनालानि, नड्वलेषु—नडभूयिष्ठदेशेषु, यानि नलवनानि—नलाख्यतृणवनानि इत्यर्थ [ "नडप्राये नड्वान नड्वल इत्यपि" इत्यमर । "नडशादाड्ड्वलच" ( ४।२।८८ पा० ) इति ड्वलच ] तेषु निलीना,—गुप्तं स्थिता चम्पेति।—चम्पाधिपस्य—तदाख्यनगरीपत, चमूषु—सेनासु, चरन्ति—भ्रमन्ति, तिष्ठन्तीति यावत् तथोक्ता, भटा —वीरा, चम्पाधिपसैनिका इत्यर्थ, मृगयाऽऽसक्तस्य—आखेटव्यसनिन गण्डकान—"गण्डार" इति वङ्गभाषया प्रसिद्धान खड्गिन, ( "गण्डके खड्गखड्गिनौ" इत्यमर ) मथ्नत —व्यापादयत इत्यर्थं, चामुण्डीपते,—चामुण्डीति म नगरी, तस्या पति,—ईश्वर तस्य पुष्करस्य—तदाख्यस्य राज्ञ, प्राणान—जीवनमित्यर्थ आचेमु,—भक्षयामासु, त निजघ्नुरित्यर्थ । एतेन मृगयाया मपि अत्यासक्ति परिहर्त्तव्या इति प्रदर्शितम। यास्मिन्न्भिन म ड-न-ल चानामसकृदा-वृत्त्या वृत्त्यनुप्रासोऽलङ्कार इति ज्ञेयम्।

(२७६) परप्रयुक्ता,—शत्रुप्रहिता, जयेति।—जयशब्देन—विजयता विजयताम् इत्याकारध्वनिना, मुखराणि—शब्दायमानानि, मुखानि—वदनानि येषां तथाभूता मङ्गा,—तदाख्या कविया, वैतालिकच्छद्मना जयशब्दमुच्चारयन्त इति भाव, [ "मङ्गा" इत्यत्र "सङ्गा" इति पाठान्तरम् अयौक्तिक मवर्णशृङ्खलायां सकारस्य विजातीयतया वृत्त्यनुप्रासानमनुकूलत्वात इति सङ्क्षेप ] वन्दीति।—वन्दिन —स्तुतिपाठका, वैतालिका इति यावत् तेषु राग —अनुराग प्रीतिरिति यावत, स एव पर,—प्रधान यस्य तथाविध तदासक्तमित्यर्थं मौखर—मुखरवंशसम्भूत, मूर्खं—निर्बोध, क्षत्रवर्माण—तदाख्य राजानम, उदखनन—उदपाटयन् निजघ्नुरित्यर्थ । एतेनापि आसक्ति दृश्यैव परिहर्त्तव्या इति प्रकटीकृतम्।

चन्द्रगुप्तः शकपतिम् अशातयदिति। (२७८) प्रमत्तानां प्रमदाकृताः प्रमादाः श्रुतिविषयम् आगता एव देवस्य। यथा —(२७९) मधुमोदितं मधुरकसंलिप्तैः लाजैः सुप्रभा पुत्त्रराज्यार्थं महासेनं काशिराजं जघान। (२८०) व्याजजनितकन्दर्पदर्पा च दर्पणेन क्षुरधारापर्य्यन्तेन अयोध्याधिपतिं परन्तपं रत्नवती

---

(२७७) चन्द्रगुप्त,कामिनीति।—कामिनीवेशेन—स्त्रीपरिच्छद गृहीत्वेत्यर्थं,गुप्त —गोपायितस्वरूप, छद्मचारी सन्नित्यर्थ, अरिपुरे—शत्रुनगरे, परकलत्रकामुक—परस्त्रीसमासक्त,शकपति—शकाख्यचत्रियविशेषराजम्, अशातयत्—न्यवधीत्। चन्द्रगुप्तभ्रातृवधूं ध्रुवदेवीं कामयमान शकाधिपति ध्रुवदेवीवेशिना चन्द्रगुप्तेन गूढ व्यापादित इति वार्त्ता। एतेन केऽपि परकलत्र नैव द्रष्टव्य,विशेषतो लोकशासकराजे इति व्यक्तीकृतम्।

(२७८) प्रमत्तानां—प्रमादशालिनां, प्रमदाकृता,—प्रमदाभि,—कामिनीभि, कृता —सम्पादिता इत्यर्थ, प्रमादा,—अनवधानतानिबन्धना विपद इत्यर्थ, देवस्य —भवत इति भाव, श्रुतिविषय—कर्णपथम्, आगता,—प्राप्ता, भवता श्रुता इत्यर्थ, तथाऽपि कार्य्यान्तरव्यासक्तचित्ततया ते विस्मृतिश्चेत् स्यादिति मत्वा अनुजीविभिरवश्य-कर्त्तव्यतया एवं स्मार्य्यते, न त्वश्रुतपूर्व्वाय ते विज्ञाप्यते इत्याशय। एतन प्रभोः समक्षम् आत्मलाघवख्यापनमेवाधिकारिणां प्रभुपरायणतायाः परिचायकम् इत्यावेदितम्।

(२७९) सुप्रभा—तन्नामप्रसिद्धा स्वमहिषी पुत्त्रराज्यार्थं—तनय राज्ये अभिषेक्तुमित्यर्थं, मधुमोदित—मधुना—मद्येन, मोदितम्—उल्लासित, जनितचित्तविकारमिति यावत, महासेन—तन्नामान, काशिराज—वाराणसीपति मधुरकसलिप्तै —मधुरकेण —मधुरमेव मधुरक तेन, विषविशेषेण इत्यर्थ, ("मधुरा शतपुष्पाया । क्लीवं विषे पसि रसे " इति मेदिनी) सलिप्तै,—दिग्धै, लाजै —भ्रष्टधान्यै, जघान—निहतवती। ("लाजैर्नूपुरैरित्यर्थं, तथा च — विषप्रदिग्धेन च नूपुरेण देवी विरक्ता किल काशिराजम्' इति मनुटीकायां कुल्लूकभट्टधृतवचनम्" इति केचित्)।

(२८०) व्याजेति।—व्याजेन—छलेन जनित,—उत्पादित, कन्दर्पस्य—कामस्य दर्प,—आविर्भावविशेषः इत्यर्थं यया तथाविधा, कलिकस्तकामभावप्रदर्शनेन आत्मवस्य काममुद्दीपयन्तीति भाव, रत्नवती—तन्नाम काचित् कामिनी, क्षुरेति।—क्षुरधारा—क्षुरस्येव—स्वनामप्रसिद्धास्त्रविशेषस्येव, धारा—तीक्ष्णता इत्यर्थ पर्य्यन्ते—प्रान्तदेशे यस्य तादृशेन, क्षुरायवत्निशितेनेत्यर्थं, दर्पणेन—आदर्शेन अयोध्याधिपतिम्—

जारूथम्; (३८१) विषचूर्णचुम्बितमकरन्देन च कर्णेन्दीवरेण देवकी देवरानुरक्ता देवसेनं सौह्मम्; (३८२) योगपरागविरसवर्षिणा च मणिनूपुरेण वल्लभा सपत्नीरुषा वैरन्त्यं रन्तिदेवम्; (३८३) वेणीनिगूढेन च शस्त्रेण विन्दुमती वृष्णिं विदूरथम्; (३८४) रसदिग्ध-मध्येन च मेखलामणिना हंसवती सौवीरं वीरसेनम्;

---

अश्वाधिराज, परन्तप—शत्रुतापिन ["द्विषत्परयोस्तापेः" (३।२।३९ पा०) इति खच्, "खचि ह्रस्वः" (६।४।९४ पा०) इत्युपधाया ह्रस्वः] जारूथ—तदाख्यं नृपं, जघानेति पूर्वेणान्वयः। एवमुत्तरत्र।

(३८१) देवरानुरक्ता—देवरे—पत्युः कनीयसि भ्रातरि, अनुरक्ता—आसक्ता, विषचूर्णेन—गरलचूर्णेन चुम्बितः—स्पृष्टः, मकरन्दः—मधु यस्य तादृशेन, कर्णेन्दीवरेण—कर्णपूरनीलोत्पलेन सौह्मं—सुह्मदेशाधिपं देवसेनं—तदाख्यम्।

(३८२) वल्लभा—प्रिया, महिषीत्यर्थः सपत्नीरुषा—स्वस्वामिनमाहृत्य सपत्नीं प्रति समासक्त इति क्रोधेनेति भावः, योगेति।—योगपरागः,—वशीकरणार्थं कल्पितः मन्त्रपूतौषधचूर्णविशेषः तेन विरसं—विरुद्धं, वर्षतीति तथोक्तेन, यद्वा,—विरसं,—विषम् (“ रसो गन्धरसे जले। शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः ॥” इति मेदिनी) तद्वर्षिणा—तत्स्राविणा, सविषपरागलिप्तमुखेनेत्यर्थः मणिनूपुरेण—रत्नमञ्जीरेण, वरन्त्य—वरन्ती नाम नगरी तस्या अधिपं वैरन्त्यं तं, ["वृद्धेत्कोसला—" (४।१।१७१ पा०) इत्यादिना ञ्यङ्] रन्तिदेवं—तन्नामानं नृपम्।

(३८३) विन्दुमती—तन्नाम्नी महिषी, वेणीनिगूढेन—केशपाशे गोपायित्वा निहितेन, वृष्णिं—वृष्णिवंशप्रभूतं, विदूरथं—तन्नामानं राजानम्, तथा च—“शस्त्रं वेणीविनिगूढितेन विदूरथं वै महिषी जघान” इति मनुटीकायां कुल्लूकभट्टधृतवचनम्।

(३८४) हंसवती—तन्नाम्नी राजमहिषी, रसदिग्धमध्येन—रसः,—विषं, (‘शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः’ इत्यमरः) तेन दिग्धं—लिप्तं, मध्यम्—अभ्यन्तरं यस्य तथाविधेन मेखलामणिना—काञ्चीदाममध्यनिबद्धरत्नेन, सौवीरं—तदाख्यजनपदाधिपतिं, वीरसेनं—तदाख्यं नृपम्। एते प्रबन्धैः स्वप्रेयसीरपि स्वात्मनः कदाचित् कालसर्पिण्यो भवन्ति इति विभाव्य नरेन्द्रः सततं सावधानैः स्थातव्यम् इति सदाशयः।

(३८५) अदृश्यागदलिप्तवदना च विषवारुणीगण्डूषपायनेन पौरवी पौरवेश्वरं सोमकम्" इत्युक्त्वा (३८६) विरराम स्वाम्यादेशसम्पादनाय च निर्जगाम।

देवोऽपि हर्षः (३८७) सकलराज्यस्थितीश्चकार। ततश्च तथा कृतप्रतिज्ञे (३८८) प्रयाणं विजयाय दिशां समादिशति देवे हर्षे, गतायुषां प्रतिसामन्तानाम् उदवसितेषु बहुरूपाणि उपलिङ्गानि वितेनिरे। तथा हि (३८९) अविप्रकृष्टाः कालदूतदृष्टय इव इतस्ततः चेरुः चटुलाः कृष्णसारश्रेणयः।

---

(३८५) अदृश्येति।—अदृश्येन—गूढेन, अगदेन—तदाख्यौषधेन, आर्द्र-चन्दनार्थे विषनाशकेन इति भावः लिप्तं—दिग्धं, वदनं—मुखं, मुखकुहरमित्यर्थः यस्याः यथा वा तथाभूता, सविषासवपायनेन राजानं जिघांसन्ती राज्ञी तेन स्वप्राणवियोगो भवेत् चेत् इति शङ्कया विषनाशकौषधं स्वमुखाभ्यन्तरे उपालिम्पदिति विभाव्यम्, पौरवी—तन्नाम महिषी विषेति।—विषवारुणी—गरलयुक्ता सुरा, तस्याः गण्डूषं—मुखपूरणं, तस्य पायनेन—पायनक्रियया, स्वभर्त्तारं राजानं पाययित्वा इत्यर्थः, पौरवेश्वरं—पुरुवंशीयानामधिपं सोमकं—तदाख्यं नृपम्। उक्तैः वचनजातैः स्त्रीविहितमहानर्थप्रदर्शनेन सहायद्रुमस्य वह्निमनोरमप्रसूनानां करण्डरूपाः स्त्रियो हि सदैव परिवर्ज्जनीयाः इति प्रतिपादितम्।

(३८६) विरराम—तूष्णीम्बभूव। स्वाम्यादेशसम्पादनाय—प्रभोराज्ञां पालयितुमित्यर्थः।

(३८७) सकलराज्यस्थितीः,—समस्तराज्यव्यवस्थाः, राजकार्य्यस्य सुष्ठु निर्वाह-विधानानीत्यर्थः विजिगीषुभिः प्रयाणकाले प्रथमं स्वाधिकाररक्षणस्य अवश्यकर्त्तव्य-त्वादिति भावः।

(३८८) दिशां विजयाय—दिग्विजयाय, प्रयाणं—यात्रां, समादिशति—आज्ञापयति सति इत्यर्थः। गतायुषां—निःशेषजीवितकालानां, प्राप्तकालानामिति भावः, प्रतिसामन्तानां—हर्षवर्द्धनस्य विपक्षनृपाणाम्, उदवसितेषु—गृहेषु, उपलिङ्गानि—उपलिङ्ग्यन्ते—अनुमीयन्ते अशुभानि यैः तानि, अनिमित्तानि इत्यर्थः, उत्पातचिह्नानीति यावत् वितेनिरे—आतनिषिरे, विस्तारं प्रापुः इति भावः।

(३८९) कालेति।—कालस्य—यमस्य, दूताः,—अनुचराः इत्यर्थः, तेषां दृष्टय

(२७०) कालायसनिगडनिश्चलीकृतचरणयुगलञ्च सकलं मालवराजलोकम्, अशेषांश्च (२७१) ससङ्ख्यालेख्यपत्रान् सालङ्काराऽऽपीडपीडान् कोषकलशान्। अथ आलोच्य तत् सर्वम् अवनिपालः (२७२) स्वीकर्तुं यथाऽधिकारम् आदिशत् अध्यक्षान्। अन्यस्मिन् च अहनि हर्षः स्वसारम् अन्वेष्टुम् उच्चचाल विन्ध्याटवीम्, अवाप च परिमितैः एव प्रयाणकैः ताम्।

(२७३) अथ प्रविशन् दूरादेव दह्यमानषष्टिकतुषविसर-विसारिविभावसूनां (२७४) वन्यधान्यबीजधानीनां धूमेन

---

(२७०) कालायसेति।—कालायसनिगडेन—कृष्णवर्णलोहशृङ्खलेन, निश्चलीकृत—गतिहीनीकृतम् आबद्धमित्यर्थः, चरणयुगलं—पादद्वन्द्वं यस्य तथाभूतं, बन्दीभूतमिति यावत्।

(२७१) ससङ्ख्यालेख्यपत्रान्—सङ्ख्या—अत्र एतत्सङ्ख्याकानि धनानि सन्तीत्येवं गणना, तस्याः लेख्यपत्रं—लिपिरित्यर्थः, तेन सहिता तान्, सालङ्कारेति।—अलङ्काराणाम्—आभरणानाम्, आपीडानां—शिरोभूषणविशेषाणां, पीडा—सङ्घः तया सहिता तान्, यद्वा,—अलङ्काराणाम् आपीडनं—घनसन्निवेशजनितातिपीडनेन, पीडा—परस्परसङ्घर्षरूपा, तया सहिता तान्, कोषकलशान्—धनपूर्णकुम्भान्।

(२७२) यथाऽधिकारम्—अधिकारानुसारेणेत्यर्थः, तत्तद्द्रव्यं यद्यद्विभागीयाध्यक्षाधिकारे तिष्ठति, तत्तदधिकारे विभज्य इति यावत् स्वीकर्तुं—ग्रहीतुम्, आत्मसात्कर्तुमिति यावत्, अध्यक्षान्—सेनापतीन् तत्तद्द्रव्यरक्षकाणां प्रधानपुरुषान् वा। स्वसारं—भगिनीम्। परिमितैः,—अल्पैः, प्रयाणकैः,—गमनैरित्यर्थः, अल्पदूरं गत्वैव इति यावत् ताम्—विन्ध्याटवीम्।

(२७३) "अथ प्रविशन्" इत्यस्य "वनग्रामकं ददर्श" इत्यनेन सम्बन्धः, तं विशिनष्टि, दह्यमानेत्यादि।—दह्यमानेषु—भस्मीभूयमानेषु, षष्टिकतुषाणां—धान्यविशेषकडङ्कराणां धान्यविशेषस्य निःसाराशानामित्यर्थः, ("कडङ्करो बुसं क्लीबे" इत्यमरः) विसरेषु—निचयेषु, विसारिणः,—प्रसारिणः, विभावसवः,—अग्नयः येषु तथोक्तानाम्।

(२७४) वन्येति।—वन्यानि—वनजातानि, यानि धान्यबीजानि—धान्यप्ररोहाङ्कुरकारणानि, तेषां धान्यः,—स्थानानि, तत्तद्धान्यबीजरक्षणस्थानानि इत्यर्थः,

(३७८) अबलवद्भि, उच्चभागभावितेन भज्यमानभूरिशालि-खलखलेखलखलकम्; (३७९) अल्पावकाशैश्च, कापिलैः, कालायसैः इव कृष्णमृत्तिकाकठिनैः, (३८०) स्थानस्थान-स्थापितस्थाणूत्थितस्थूलपल्लवैः, दुरुपगमश्यामाकप्ररूढिभिः, अलम्बुसबहुलैः, (३८१) अविरहितकोकिलाक्षक्षुपैः, विरलविरलैः केदारैः कृच्छ्रकृष्यमाणैः नातिप्रभूतप्ररूढ-

---

कृषेत्र व्यापृतैरिति भाव, कुद्दालैः।—कुद्दाल,—भूखननास्त्रविशेष, प्रायेण—बाहुल्येन, कृषि,—कर्षणसाधन येषा तथाभूतै, कर्षीबलै,—कृषकसमूहै।

(३७८) अबलवद्भि,—शालाद्यबलशालिभिरित्यर्थ, उच्चभागभावितेन—उच्च,—उन्नत भाग,—भाव यत्र तथाभूत भावित—वचन तेन, उन्नतभाग्यशालिनां पुरुषेन् भाव्येनेति यावत एतत्क्षेत्रोत्पन्नशस्यविक्रयेणाहं प्रभूतधनो भूत्वा विविधसुखमनुभविष्यामि इत्येवरूपेण दैवं यदानुकूलं भवति, तदा एतेनैव मे प्रभूतधनं भविष्यतीत्येवरूपेण वा इति भाव भज्यमानेति।—भज्यमानानि—विभज्य गृह्यमाणानि इत्यर्थ, भूरिशालिखलखलेखलानां—प्रभूतधान्यरचनस्थानानां धान्यमर्दनस्थानानां वा, खलखलकानि—सकलानि यस्य तत् वा तम्।

(३७९) अल्पावकाशैः,—अल्पपरिसरैः, कापिलैः,—पिङ्गलवर्णैः, कालायसैरिव—कृष्णलौहनिर्म्मितैरिव, कृष्णमृत्तिकाकठिनैः—कृष्णमृत्तिका—मृत्तिकाविशेष, तद्वत् कठिना,—कठोरा ते, यद्वा,—कृष्णमृत्तिकया कठिनैः, कठोरकृष्णमृत्तिका-विशिष्टैरित्यर्थः।

(३८०) स्थानेति।—स्थानस्थानेषु—केषुचित् केषुचित प्रदेशेषु, स्थापितेभ्य,—रचितेभ्य, शस्यच्छेदनकाले इति भाव, स्थाणुभ्य,—शाखापल्लवहीनतरुभ्य इत्यर्थ, उत्थिता,—प्ररूढा, स्थूला —पृथव, पल्लवा,—किसलया येषु तथाभूतै, दुरुपगमेति। —दुरुपगमा,—दुर्गमा, श्यामाकाना,—घासविशेषाणां, प्ररूढय,—अङ्कुरा येषु तथाभूतैः, अलम्बुसबहुलैः, लम्बालुकाकीर्णैः गुल्मिभिरीदृशप्रायैर्वा इत्यर्थः।

(३८१) अविरहितेति।—न विरहिता,—शून्या, कोकिलाक्षक्षुपा,—तदाख्यक्षुद्रशाखाविशिष्टवृक्षभेदा येषु तथोक्तैः, विरलविरलैः,—अल्पाल्पैः, परस्पराभावात् अनतिबहुलैः इति भाव, कृच्छ्रकृष्यमाणैः,—काठिन्यात् कष्टेन कर्षणं नीयमानैः इत्यर्थ, केदारैः,—क्षेत्रैः, नातीति।—नातिप्रभूत—नात्यधिक यथा तथा,

गतागताप्रहतभुवम्; (३८२) उपचैत्यसुपरचितैर्मञ्चैश्च सूच्यमानश्वापदोपद्रवम्; दिशि दिशि च (३८३) प्रतिमार्गद्रुमकृतानां, पथिकपादप्रस्फोटनधूलिधूसरैः नवपल्लवैर्लाञ्छितच्छायानाम्, (३८४) अटवीसुलभसालकुसुमस्तवकाञ्चितनवखातकूपिकोपकण्ठप्रतिष्ठितनागस्फुटानाम्, (३८५) अच्छिद्रकटकल्पितकुटीरकाणां, (३८६) कुटिलकीटवेणीवेश्म-

---

कृच्छ्रकृत्यमापत्स्यादिति भाव., प्रहताभ्या—प्रारब्धाभ्यां, गतागताभ्या—यातायाताभ्याम्, अप्रहता—नातिक्षुण्णा, नातिक्लृष्टा इत्यर्थ, भू,—भूमि यत्र ताम्।

(३८२) उपचैत्य—चैत्यसमीपे, [सामीप्येऽव्ययीभाव] यद्वा,—चैत्येषु उप चैत्यमिति [विभक्त्यर्थेऽव्ययीभाव] उपरचितै,—कल्पितै, मञ्चै,—"माचा" इति वङ्गभाषया प्रसिद्धै. ["उपरचितैर्मञ्चैश्च" इत्यत्र "उपरचितैरुच्चैर्मञ्चैश्च" इति पाठान्तरम्] सूच्यमानेति।—सूच्यमान,—अनुमीयमान, श्वापदाना—हिंस्रजन्तूनां, श्वापदस्य—व्याघ्रस्य वा, उपद्रव,—उत्पात यत्र ताम्।

(३८३) प्रतिमार्गेति।—प्रतिमार्गं—प्रतिपथं, द्रुमै,—वृक्षै, कृताना—रचितानाम्। पथिकेति।—पथिकाना—पान्थाना, पादप्रस्फोटनात्—चरणताडनात्, सवेगपदक्षेपणादित्यर्थ., उत्थिता इति शेष, या धूलय,—पांशव, ताभि, तत्सङ्गमेन इति भाव, धूसरा,—ईषत्पाण्डुवर्णा तै, लाञ्छितेति।—लाञ्छिता,—चिह्निता, युक्ता इत्यर्थ छाया—प्रतिबिम्ब यासा तदीयानाम्।

(३८४) अटवीति।—अटव्याम्—अरण्ये, सुलभा,—सुप्रापा, ये साला,—वृक्षविशेषा, तेषा कुसुमस्तवकै,—पुष्पगुच्छै, अञ्चिता,—शोभिता इत्यर्थ, तत्पुष्पगुच्छानां निजजलेषु पतनादिति भाव, नवखाता—नूतनखनिता, या कूपिका—क्षुद्रकूप, तस्या उपकण्ठे—अन्तिके, ("उपकण्ठान्तिकाभ्यर्णाभ्यग्रा" इत्यमर) प्रतिष्ठिता,—प्रतिष्ठा गता, ये नागस्फुटा,—नागदन्तिका, प्रस्फुटितपुष्पनागकेशरवृक्षा वा यत्र तासाम्।

(३८५) अच्छिद्रेति।—अच्छिद्र—छिद्ररहित यथा तथा, कटै,—शराख्य तृणविशेषै, किलिञ्जैर्वा, ("कट श्रोणौ द्वयो पुंसि किलिञ्जेऽतिशये शरे" इति मेदिनी) कल्पितानि—रचितानि, कुटीरकाणि—क्षुद्रकुटीराणि यासा तासाम्।

(३८६) कुटिलेति।—कुटिला—वक्रगामिनी, या कीटवेणी—कीटश्रेणी,

सानशक्तुधारशरावश्रेणीश्रितानाम्, (३८७) अध्वगजनजग्ध-जम्बूफलास्थिशबलसमीपभुवाम्, उद्दूलितधूलीकदम्बस्तवक-प्रकरपुलकिनीनां, (३८८) कण्टकितकर्करीचक्राक्रान्त-काष्ठमञ्चिकामुषितवृषां, तिम्यत्तलशीतलसिकतिलकलसी-शमितश्रमाणाम्, (३८९) आम्लानशैवलश्यामलितालिञ्जर-

पिपीलिकापङ्क्तिरिति भावत्, तथा वेष्ट्यमाना,—आकीर्य्यमाणा, शक्तुभिः,—शष्पयवचूर्णैः धारा,—शबला शरावाणां—मृण्मयभाजनविशेषाणां, श्रेण्यः,—पङ्क्तयः, ताभिः श्रिता,—युक्ता तासाम्।

(३८७) अध्वगेति।—अध्वगैः,—पान्थैः, जनैः,—लोकैः जग्धानां—खादितानां, जम्बूफलानां—जाम्बवफलानाम् अस्थिभिः—बीजैः, अस्थिभिरिति भावः, शबला—चित्रा, समीपभूः,—निकटस्थभूमिर्यासां नदीकानाम्। उद्दूलितेति।—उद्दूलितः,—उत्थितपरागैः, धूलीकदम्बानां—नीपभेदानां, कदम्बविशेषाणामित्यर्थः, ("धूलीकदम्बो नादेयः स्यात् तिनिशे वृत्तद्रुमः" इति मेदिनी) स्तवकप्रकरैः,—पुष्पगुच्छसमूहैः, पुलकिन्यः,—पुलकशालिन्यः, रोमाञ्चिता इव दृश्यमाना इति भावः तासाम्।

(३८८) कण्टकितेति।—कण्टकितानां सञ्जातकण्टकानां, कर्करीणां—लताविशेषाणां, [ कर्करी" इत्यत्र 'कर्कटी' कर्कारु" इति वा पाठः समीचीनः, कर्करीशब्दस्य लताविशेषवाचकत्वस्य कोषादावदर्शनात्, कर्कटी कर्कारु इति वा पाठे,—"काँकड़ इति प्रसिद्धः फलविशेषः, कुष्माण्डी वा इति बोध्यम् ] चक्रैः,—मण्डलैः, आक्रान्ता,—आवृता, या काष्ठमञ्चिका,—दारुनिर्म्मितमञ्चविशेषा, ताभिः, तदुपवेशनैरित्यर्थः, फलभक्षणार्थमिति भावः, मुषिता,—हृता, वृषः,—तृष्णा यत्र तथाविधानाम्। तिम्यदिति।—तिम्यत्सु—आर्द्रेषु, तलेषु—अधोदेशेषु, शीतलाभिः,—हिमाभिः, सिकतिलाभिः,—वालुकामयीभिः कलसीभिः,—घटैः, घटस्पर्शेणेति भावः, शमितः,—अपनीतः, श्रमः,—सन्तापजायासः इत्यर्थः, पान्थानामिति भावः, यासु नदीकानाम्।

(३८९) आम्लानेति।—आम्लानैः,—ईषत्क्लान्तैः, ईषद्गीभूतैः, निविड-भावेनावस्थितैरित्यर्थः, शैवलैः,—जलनीलीभिः, नियतजलसद्भावात् म्लानताभावात् इति भावः, श्यामलितेषु—श्यामलतां गतेषु, अलिञ्जरेषु—मणिकेषु,

जायमानजलजडिम्नाम्, (३९०) उदकुम्भाऽऽकृष्टपाटलशर्करा-शकलशिशिरीकृतदिशां, (३९१) घटमुखघटितकटहारपाटल-पुष्पपुटानां, (३९२) शीकरपुलकितपल्लवपूलीपाल्यमानशोष-सरसशिग्रुसहकारफलजूटीजटिलस्थाणूना, (३९३) विश्राम्यत्-कार्पटिकपेटकपरिपाटीपीयमानपयसाम्, अटवीप्रवेशप्रपाणां

"जाला" इति वङ्गीयैराख्यातेषु मृन्मयजलाधारविशेषेषु इत्यर्थ, ("अलिञ्जर स्यान्मणिकम्" इत्यमर) जायमान,—सम्पद्यमान जलाना—सलिलाना, जडिमा—शैत्य यासु तथोक्तानाम्।

(३९०) उदकुम्भेति।—उदकुम्भेभ्य,—जलघटेभ्य, आकृष्टाना—बहिरानीताना, पाटलाना—श्वेतरक्ताना, शर्कराणा—कर्कराख्यवालुकाना, शकलेन—खण्डेन, अलसिक्तेन इति भाव, शिशिरीकृता,—शीतलीकृता, वायुना जलौघाशस्य इतस्ततो विक्षिप्यमाणत्वादिति भाव, दिश,—ककुभ यासु तथोक्तानाम्।

(३९१) घटेति।—घटानाम—उदकुम्भाना मुखेषु—आस्येषु उपरिभागेषु इत्यर्थ, घटित,—रचित, कटहार—तृणविशेषनिर्म्मितहार, पाटल—श्वेतरक्त, पुष्पपटश्च—कुसुमावरणश्च, यद्वा,—घटमुखे घटितकटहारे यत पाटलपुष्प—"पारुल" इति वङ्गीयैराख्यात पाटलाख्यकुसुमविशेष ग्रथितमिति भाव, तं पुट,—आच्छादनम अधिवासनार्थमिति भाव यासु तथोक्तानाम्।

(३९२) शीकरेति।—शीकरै,—अम्बुकणै, पुलकिता—सम्पृष्टा इति यावत, या पल्लवपूली—किसलयसमूह, तया पाल्यमान —रक्ष्यमाण आप्याय्यमान इत्यर्थ, अत एव शोष्योऽपि—शोषणयोग्योऽपि, सरस —अशुष्क इत्यर्थ, परिपुष्ट इति यावत, य शिग्रुसहकार,—बालाम्रतरु, तस्य फलजूटीभि —फलसमूहै, जटिल,—सयुक्त, स्थाणु,—शाखापल्लवरहिततरु इत्यर्थ यासु तथोक्तानाम्, यद्वा —शीकरपुलकित पल्लवपूलीपाल्यमान अत एव शोष्योऽपि शाखापल्लवादिशून्यत्वेनावरणराहित्यादिति भाव, सरस, आम्रशाखाभिराच्छादनादिति भाव, शिग्रुसहकारफलजूटीजटिल स्थाणुर्यत्र तथोक्तानाम्।

(३९३) विश्राम्यदिति।—विश्राम्यद्भि —श्रममपनुदद्भि, कार्पटिकै,—कर्पटेन—कषायवस्त्रेण चरन्तीति तै, तीर्थयात्रिकैरित्यर्थ, पेटकपरिपाटीभि,—पात्रविशेषश्रेणीभि, यद्वा —कार्पटिकपेटकै,—तीर्थयात्रिकवृन्दकै, ("पेटक पुस्तकादीना मञ्जूषाया च वृन्दके" इति मेदिनी) परिपाट्या—आनुपूर्व्या, अनुक्रमेणेत्यर्थ,

शैत्येन त्याजयन्तमिव ग्रैष्मम् उष्माणम्, (३९४) क्वचित् अन्यत्र ग्राहयन्तमिव अङ्गारीयदारुसङ्कट दाहिभि र्व्योकारैः; सर्व्वतश्च (३९५) प्रातिवेश्यविषय-वासिना, समासन्नग्रामगृहस्थापितस्थविरपरिपाल्यमानपाथेय-स्थगितेन, (३९६) कृतदारुणदारुव्यायामयोग्याङ्गाभ्यङ्गेन, (३९७) स्कन्धाध्यासितकठोरकुठारकण्ठलम्बमानप्रातराशपुटेन,

पीयमानं सलिलं—जलं यासां यत्र वा तथोक्तानाम् अरण्यप्रपाणाम्—अरण्ये प्रवेश पानीयशालानाम्, ("प्रपा पानीयशालिका" इत्यमरः)। ग्रैष्मं—नैदाघम् उष्माणम्—उत्तापम्।

(३९४) अङ्गारीयदारुसङ्कटदाहिभिः—अङ्गारेभ्यः—ज्वलितेभ्यः हितानि अङ्गारीयाणि—अङ्गारोपयोगीनि यानि दारूणि—काष्ठानि तेषां सङ्कट—सञ्चयं, राशिरित्यर्थः तं दहन्ति—भस्मीकुर्व्वन्तीति तथाभूतैः व्योकारैः—लौहकारैः कर्म्मकारैः इत्यर्थः ("व्योकारो लोहकारकः" इत्यमरः) अन्यत्र क्वचित् ग्राहयन्तमिव—सङ्क्रामयन्तमिव, उष्माणमिति पूर्व्वेणान्वयः।

(३९५) प्रातिवेश्येति।—प्रातिवेश्यः—प्रतिवेशी विषयवासी—जनपदवासी तेन, यद्वा—प्रातिवेश्यः—प्रतिवेशस्य—प्रतिवेशिनः अयं प्रातिवेशिसम्बन्धीत्यर्थः, विषयः—आश्रयः ("विषय आश्रये" इत्यमरः) तत्र वसति—तिष्ठतीति तेन यद्वा, —प्रातिवेश्यः—गृहसमीपवर्त्ती यो विषयः—देशः स्थानमित्यर्थः ("विषयो गोचरे देशे तथा जनपदे ऽपि च" इति मेदिनी) तद्वासिना। समासन्नेति।—समासन्ने—सन्निहिते, ग्रामे—आवसथे यत् गृहं—भवनं तत्र स्थापितेन—रक्षितेन स्थविरेण—वृद्धेन परिपाल्यमानं—रक्ष्यमाणं यत् पाथेयं—सम्बलं, तेन स्थगितः—पाथेयानधिगमात् गमनात् निवृत्त इत्यर्थः तेन।

(३९६) कृतेति।—कृतः—विहितः दारुणस्य—कठिनस्य दारुव्यायामस्य—काष्ठच्छेदनरूपपरिश्रमस्य योग्यः—अनुरूपः अङ्गाभ्यङ्गः—शरीरे तैलमर्द्दनं येन तथोक्तेन अभ्यङ्गलक्षणमुक्तं यथा—"मूर्द्ध्नि न्यस्तं यदा तैलं भवेत् सर्व्वाङ्गसङ्गतम्। स्रोतोभिस्तर्पयेद्देहं अभ्यङ्गः स उदाहृतः॥" इति।

(३९७) स्कन्धेति।—स्कन्धे—अंसदेशे अध्यासितस्य—स्थापितस्य कठोरस्य—तीक्ष्णस्य इति यावत् कुठारस्य—परशोः, कण्ठे—अग्रभागे इत्यर्थः, लम्बमानं—तिष्ठदित्यर्थः प्रातराशपुटं—प्रातर्भोजनपात्रं यस्य तथाभूतेन।

(३९८) पाटच्चरप्रत्यवायप्रतिपन्नपटच्चरेण, कालवेयक-त्रिगुणव्रततिवलयपाशग्रथितग्रीवाग्रथितैः पत्रपोटावृतमुखैः पीतकूटैः उदकधारिणा (३९९) पुरःसरवलद्बलीवर्द्दयुग-सरेण, नैकटिककुटुम्बिकलोकेन, काष्ठसङ्ग्रहार्थम् अटवीं प्रविशता, (४००) श्वापदव्यधनव्यवधानवहलीसमारोपित-कुटीकृतकूटपाशैश्च, (४०१) गृहीतमृगतन्तुतन्त्रीजालवलय-

---

(३९८) पाटच्चरेति।—पाटच्चरः,—चौरः, ("चौरैकागारिकस्तेन । पाटच्चरमलिम्लुचाः" इत्यमरः) स एव प्रत्यवायः—अन्तरायः, तेन हेतुना प्रतिपन्नः—गृहीतः, परिहितमित्यर्थः पटच्चरः—जीर्णवस्त्रं येन तथोक्तेन, ("पटच्चरं जीर्णवस्त्रम्" इत्यमरः) दस्युतस्करादिभिः परिहृतनूतनवस्त्रस्य बलपूर्व्वकापहरणभयात् इति भावः। कालेति।—कालवेयकस्य—तृणविशेषस्य, त्रिगुणः—त्रिरावृत्तः यः व्रततिवलयः—लतामण्डलमेव, पाशः,—रज्जुः, यद्वा,—त्रिगुणः व्रततिवलयपाशः—लतामण्डल-रचितरज्जुः तेन ग्रथितया—वेष्टितया, ग्रीवया—कण्ठेन ग्रथितैः,—विधृतैः, कण्ठलग्नै-रित्यर्थः तादृशग्रीवाबद्धैरिति यावत् पत्रेति।—पत्रपोटया—पत्रसम्पुटेन, आवृतम्—आच्छादितं, मुखम्—अग्रभाग इत्यर्थः येषां तथोक्तैः, पीतकूटैः,—पानपात्र-विशेषैः उदकधारिणा—सङ्गृहीतसलिलेन।

(३९९) पुरःसरेति।—पुरःसरम्—अग्रसरं यथा तथा, वलत्—चलत्, बलीवर्द्दयुगलम्,—वृषभयुगलं यस्य तेन, ["पुरःसरवलद्बलीवर्द्द—" इत्यत्र पुरः-सरबलवद्बलीवर्द्द—" इति पाठस्तु समीचीनतया प्रतिभाति, तथात्वे पुरःसरः,—अग्रे गच्छन्, बलवान्—सबलः बलीवर्द्दयुगलः यस्य तेन] नैकटिककुटुम्बिकलोकेन—सन्निहितगृहस्थलोकेन "उपेतम्" इत्यनेनान्वयः। एवमुत्तरत्रापि तृतीयान्त-विशेष्यपदेन सहेति बोद्धव्यम्।

(४००) श्वापदेति।—श्वापदानां—व्याघ्रादिहिंस्रजन्तूनां, व्यधनाय—वेधनाय, व्यवधाने—अन्तराले, या वहली—निभृतं स्थानं, तत्र समारोपिता—रचितेत्यर्थः, या कुटी—क्षुद्रं तृणनिर्मितं गृहं तत्र कृताः,—स्थापिताः, कूटपाशाः,—कूटरज्जवः यन्त्रवागुरा वा यैः तथाभूतैः।

(४०१) गृहीतेति।—गृहीताः,—धृताः, मृगतन्तवः,—मृगाणाम् अन्त्राणि इति यावत्, ते एव तन्त्रीजालानि—रज्जुसमूहाः, तेषां वलयैः,—मण्डलैः, कालतान्त

वागुरैः, बहिर्व्याधैः विचरद्भिः; अंसावसक्तवीतंसव्यालम्ब्यमानबालपाशिकैश्च, (४०२) सङ्गृहीतग्राहककक्करकपिञ्जलादिपञ्जरकैः शाकुनिकैः सञ्चरद्भिः, (४०३) च्युतलासकलेशलिम्पलताबद्धलट्वालम्पटानाञ्च पेटकैः पाशकशिशूनाम् अटद्भिः, (४०४) वृक्षस्तम्बान्तरिततित्तिरितरलायमानकौलेयककुलचाटुकारैश्च विहगकृतया मृगयुयुवभिः

---

भावः, वागुरा—पाशः यैः तथाभूतैः, मृगान्तनिर्मितपाशधारिभिरित्यर्थः, बहिः, विचरद्भिः,—सञ्चरद्भिः व्याधैः—लुब्धकैः। अंसेति।—अंसेषु—स्कन्धदेशेषु अवसक्ता,—संसक्ता, वीतंसाः,—"फालनजा" इति वङ्गभाषया ख्यातानि मृगपक्षिणां बन्धनसाधनानि उपकरणानि ("वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम्" इत्यमरः) व्यालम्बमाना—दोलायमाना इत्यर्थः, बालपाशिका—पादरज्जवः येषां तैः, यद्वा,—अंसावसक्तवीतंसेषु व्यालम्बमाना—सम्बध्यमाना इत्यर्थः, बालपाशिका येषां तैः।

(४०२) सङ्गृहीतेति।—सङ्गृहीतानि—धृतानीत्यर्थः, ग्राहकाणां—घातिविहगानां, श्येनानामित्यर्थः, ("ग्राहकौ घातिविहगौ व्यालानाञ्च ग्रहीतरि" इति मेदिनी) ककराणां—क्रकराणां, "कयेर" इत्याख्यपक्षिणामित्यर्थः, ("क्रकरः ककरो क्रमौ" इत्यमरः) कपिञ्जलादीनाञ्च—गौरतित्तिरीणां चातकानां वा, पञ्जरकाणि—पिञ्जराणि यैः तथाभूतैः शाकुनिकैः,—पक्षिव्याधैः, पाशलुब्धैः इत्यर्थः।

(४०३) च्युतेति।—च्युतलासका,—विलासशून्या इत्यर्थः, निष्पन्दा इति यावत् तथा लेशेन—लवेन लासकलवेनेति यावत् कदाचित् वायुवशादिति भावः लिम्पा—अस्पष्टा, लता,—वीरुध एव, बद्ध—नार्थ, तासु या लट्वाः,—पक्षिभेदाः, बाबुइचटका इति यावत्, ("लट्वा करञ्जभेदे स्यात् फले वाद्ये खगान्तरे" इति मेदिनी) तासु लम्पटाः,—लुब्धा तेषां, पाशकशिशूनां—व्याधबालकानां, अटद्भिः,—भ्रमद्भिः, पेटकैः,—समूहैः।

(४०४) वृक्षेति।—वृक्षाणाम्—अर्जुनानां, स्तम्बेषु—गुच्छेषु, अन्तरिताः,—निभृतस्थिताः, ये तित्तिरयः,—तदाख्यपक्षिभेदाः, तेषु तरलायमानानां—लोलुपानां, कौलेयकानां—सारमेयाणां, कुक्कुराणामित्यर्थः, ("कौलेयकः सारमेये कुलीने" इति मेदिनी) यत् कुलं—समूहः, तस्य चाटुकारैः,—सेवकैरिति यावत्, तत्सहायैः

क्रीडद्भिः, (४०५) परिणतचक्रवाककण्ठकषायरुचां क्षौमव्यानां वल्कलानां कलापान्, नातिचिरोद्धृतानाञ्च धातुत्विषां धातकीकुसुमानां गोणीः अगणिताः, (४०६) पिचव्यानां चातसीगणपट्टमूलकानां पुष्कलान् सम्भारान्, भारांश्च मधुनो माक्षिकस्य, मयूराङ्गजस्य, अक्लिष्टमधूच्छिष्टचक्रवालानां, (४०७) लम्बमानलामज्जकजूटजटानाम्, अपत्वचां खदिर-

रिति भावः, विहङ्गमृगैर्या—पक्षिषु आखेटं क्रीडद्भिः,—खेलद्भिः, कुर्व्वद्भिरित्यर्थः, व्याधयुवभिः,—तरुणैः व्याधैः।

(४०५) परिणतेति।—परिणत,—स्थविरः यः चक्रवाकः,—रथाङ्गनामा पक्षिभेदः, तस्य कण्ठः—गलदेशः, तद्वत् कषाया—पीतरक्ता, लोहिता वा ("कषायो रसभेदेऽपि। सुरभौ लोहिते त्रिषु॥" इति मेदिनी) रुक्—प्रभा येषां तथोक्तानां, क्षौमव्यानां—क्षौमवस्त्रकसूत्रनिर्म्माणोपयोगिनाम, ऐदवाणामित्यर्थः, वल्कलानां—त्वचां कलापान् सङ्घान्। नातिचिरोद्धृतानाम्—अनतिचिरोच्चितानां, धातुत्विषां—गैरिकवर्णानां, ("धातुमनःशिलाद्यद्रेर्गैरिकन्तु विशेषतः" इत्यमरः) धातकीकुसुमानां—धातुपुष्पिकाख्यपुष्पाणां, "धाइफुल" इति वङ्गीयैराख्यातानामित्यर्थः, अगणिताः,—असङ्ख्याताः, गोणीः,—सुत्रनिर्म्मितभाजनविशेषान्।

(४०६) पिचव्यानां—पिचु,—तूलः तदुपयोगिनां, कार्पासानामिति भावः, तथा अतसीति।—अतसीगणाः—अतसीभेदाः, पट्टाः,—वसनभेदाः, मूलकानि—ओषधिभेदाः तेषाम्, यद्वा,—अतसीगणानां—क्षौमवस्त्रोपयोगिनां चूनासमूहानामित्यर्थः, पट्टानां—कौषेयाणां, कौषेयवसनोपयोगिनामित्यर्थः, मूलकानि—मूलानि, बीजानि इत्यर्थः तेषां, पुष्कलान्—प्रभूतान् सम्भारान्—निचयान्। माक्षिकस्य—मक्षिका विशेषकृतस्य, मधुनः,—क्षौद्रस्य इत्यर्थः भारान्—समूहान्। मयूराङ्गजस्य—शिखिपिच्छस्य, "भूयसो भारकान्" इति परेणान्वयः। अक्लिष्टेति।—अक्लिष्टानाम्—अक्षुण्णानां मधूच्छिष्टानां—सिक्थकानां, "मोम" इति वङ्गे प्रसिद्धानामित्यर्थः चक्रवालानि—समूहाः तेषाम्। ["मधूच्छिष्टचक्रवालानाम्" इत्यत्र "मधूच्छिष्टचक्रमालानाम्" इति पाठे,—मधूच्छिष्टचक्राणां—"मौमाछिर चाक" इति प्रसिद्धानां मधुमक्षिकाणां वासभूतानां सिक्थकबीजानां, मालाः,—श्रेणयः तासाम्]।

(४०७) लम्बमानेति।—लम्बमानानां—दीर्घाणामित्यर्थः, लम्बमानाः,—

(४११) धूर्गतधूलिधूसरसैरिभसरोषस्वरसाध्यमाणानां, सव्रीडचटुलचक्रचीत्कारिणीनां शकटश्रेणीनां सम्पातैः (४१२) सम्पाद्यमानदुर्बलोर्वीविरूढक्षेत्रसंस्कारम्; (४१३) आरक्षिद्विरदान्तवाहकदण्डोड्डीयमानहरिणहेला-लङ्घिततुङ्गवैणववृतिभिः, (४१४) निखातगौरकाण्डशङ्क-शङ्कितशशकशकलिततुङ्गशृङ्गैः, प्रयत्नप्रसृतविशङ्कटविटपैः,

(४११) धूर्गतेति।—धूर्गत —धुर—भार, गत,—प्राप्त, भारवहने नियुक्त इत्यर्थः, धूलिभि —मार्गरजोभिः, धूसर,—आपाण्डुर, य सैरिभ,—महिष, (लुलापो महिषो वाहद्विषत्कासरसैरिभाः" इत्यमर) तेन सरोषेण—सक्रोधेन, स्वरेण—गम्भीरस्वविशेषेण साध्यमाणा —सञ्चाल्यमाना तासां, सव्रीडेति।—सव्रीडता—स्खलता, चटुलाना—चञ्चलाना घूर्णमानानामित्यर्थः, चक्राणा—रथाङ्गाना, चीत्कार —शब्दविशेष तद्वतीनाम्। सम्पातै —सञ्चारै।

(४१२) सम्पाद्यमानेति।—सम्पाद्यमान —जन्यमान, दुर्बल,—सामान्य इति भाव उर्व्या,—पृथिव्या विरूढाणा—विशदरूढाणा, कर्कमानामित्यर्थ पदवाक्यम् इति यावत क्षेत्राणा—केदाराणा सस्कार —संशोधन, कर्षणमिति भाव ग्रन्थ लर्घानम।

(४१३) आरक्षेति।—आरक्षाय—रक्षणाय, धनैश्यानामिति भाव, यद्वा, —आरक्षै —रक्षक द्विपा,—प्रेरिता दान्ता,—दमनया, ये वाहकदण्डा,—प्रकलगुडा, ताडनयष्टय इत्यर्थ तै उड्डीयमाना —उन्मुख उत्प्लुत्य पलायमाना इत्यर्थ, ये हरिणा —मृगा, तै हेलया—अनायासेन लङ्घिता—अतिक्रम्य गता, तुङ्गा —उन्नता, वैणवी—वेणुसम्बन्धिनी वर्त्मनाम्यत्यर्थ, वृत,—वेष्टन, प्राकारप्राचीर मित्यर्थ येषा ते, ("प्राचीर प्रान्ततो वृत" इत्यमर)।

(४१४) निखातेति।—निखातै —निहितै शस्यविघातकप्राणित्राणनार्थं भूमिनिखातदण्डोपारस्थापितैरिति भाव गौर —शुभ्रै काण्डै,—कङ्काल मस्त काष्ठिभिरित्यर्थ ।शरस्तम्बपर्वैरिति यावत ("काण्डो नलकाण्डनारिकेलफला स्थिनि" इदि रुद्रो) शङ्कुभि,—कील काष्ठोपलाचलैरिति भाव, शङ्किता,—भीता शशका,—"खरगोश" इति वङ्ग प्रसिद्धा मृगभेदा, तै शकलिता,—खण्डिता, तुङ्गा,—उन्नता, शृङ्गा —अग्रभाग, अविकासतपत्रादि वा यद्वा ते, प्रयत्नेति।—प्रयत्नेन—प्रकृष्टादरविशेषेण, प्रसृत —पोषिता, विशङ्कटा,—विशाला,

काष्ठारोपितकाष्ठालुकलताप्रतानविहितच्छायैः, (४१९) परिमण्डलबदरीमण्डपकतलनिखातखादिरकीलबद्धवत्सरूपैः, कथमपि (४२०) कुक्कुटरटितानुमीयमानसन्निवेशैः, अङ्गनाशस्थिस्तम्भतलविरचितच्छिन्नपूपिकावापिकैः, (४२१) विकीर्णबदरपाटलपटलैः, (४२२) वेणुपोटदलनलमयहतिविहित

---

छत्रेषु, काष्ठेषु—दारुषु आरोपिता,—उत्थापिता, या काष्ठालुकलता,—अलाबूलता, स्वनामप्रसिद्धकन्दविशेषस्य वल्ली वा तासां प्रतानैः,—शाखाप्रशाखाभिः, विहिता,—कृता, छाया यैषां ते ।

(४१९) परिमण्डलेति ।—परिमण्डल—समन्तात् गोलं, यत् बदरीमण्डपक—कौलिगृहं, बदरीवृक्षाणामाश्रितानकुञ्जभवनमित्यर्थः, बदरीकाष्ठानामतगृहावशेषो वा, तस्य तलेषु—अधोभागेषु निखात—रोपिते खादिरे—खदिरदारुमये कीले—शङ्कौ, बद्धा,—यन्त्रिता, वत्सरूपा—क्षुद्रा वत्सा यैषां ते ।

(४२०) कुक्कुटेति ।—कुक्कुटानां—ताम्रचूडानां रटितेन—रवेण, अनुमीयमानः,—प्रतीयमानः सन्निवेशः—संस्थानं रचना वा येषां ते, समन्तात् वृक्षवल्ल्यादिभिः पिहितत्वेन अदृश्यत्वादिति भावः । अङ्गनेति ।—अङ्गनानां—स्त्रीणां, अस्थिस्तम्भः—माङ्गलिकस्तम्भः माङ्गलिकानुष्ठानस्मरणाय प्रोथितस्थूणाविशेष इत्यर्थः तस्य तले—निम्नदेशे विरचिता—निर्मिता, छिन्नपूपिकावापिका यैषां ते । [“अङ्गना वापिके” इति पाठस्य दुर्बोधार्थतया एतत्स्थाने पुस्तकान्तरस्थेन ‘अङ्गनाऽऽशास्तम्भतलविरचितपक्षिपूपिकावापिकैः’ इति पाठः कथञ्चित् समीचीनतया प्रतिभाति, एतत्पक्षे,—अङ्गनाम अशन—वङ्गदेशस्य जलपुष्पवृक्षस्येत्यर्थः, (“अशनि कुक्षीगौ च वङ्गेषु न तरौ पुमान्” इति मेदिनी) यः स्तम्भः—तद्दारुनिर्मितस्थूणाकारः पक्षिणाम् उपवेशनार्थस्थानविशेष इत्यर्थः तस्य तले—निम्नदेशे, विरचिता पक्षिणां—विहङ्गानां, पूपिकावापिका—अङ्गनाप्रदत्तपिष्टकावशेषभक्षणानन्तरं जलपानाय “चौवाचा” इति वङ्गभाषाप्रसिद्धा क्षुद्रसरसी येषु तैरित्यर्थः ]।

(४२१) विकीर्णेति ।—विकीर्णं,—विक्षिप्तं बदरीवृक्षात् वायुना पातितैः विक्षिप्तं, बदरैः—कोलफलैः, पाटलानि—श्वेतरक्तानि पटलानि—छदिः “चाल” इति वङ्गीयभाषाख्यातानि गृहाच्छादनानि इत्यर्थः येषां तैः, (‘पटलं छदिः’ इत्यमरः)।

(४२२) वेणुरिति ।—वेणवः—वंशाः, पोटदलाः,—खण्डशकलानि,

भित्तिभिः, किंशुकरोचनारचितमण्डलमण्डपवल्लजबद्धाङ्गारराशिभिः, (४२३) शाल्मलिफलतूलसञ्चयबहुलैः, सन्निहितनलशालिशालूकखण्डकुमुदबीजवेणुतण्डुलैः, (४२४) सङ्गृहीतमालबीजैः, भस्ममलनम्लानकायस्थकूटव्याहतकटैः,

["—पीटदल—" इत्यत्र "—पीटगल—" इत्येव पाठः साधीयान् कोषादौ पीटदलशब्दस्य अदर्शनात्, अस्मिन् पक्षे,—वेणव,—वंशाः पीटगलाः,—काशाख्यतृणभेदा इत्यर्थः "अथ पीटगलः पुंसि नले च काशमञ्जरी" इति मेदिनी] नली,—नडाख्यतृणभेदाः शराः,—गुन्द्राख्यतृणविशेषाश्च, तन्मयी—तदात्मिका, या वृति—वेष्टनं, सैव ताभिर्वा विहिता—कृता, भित्ति,—कुड्यं येषां ते, किंशुकेति।—किंशुकानि—पलाशपुष्पाणि, रोचना—गोरोचनाख्यमाङ्गल्यद्रव्यभेदः, ताभ्यां रचितं—कृतं मण्डलं—गोलाकाररेखा यस्य तादृशे, मण्डपे—गृहे, वल्वजे,—तृणभेदे बद्धः—रचितः, अङ्गारराशि,—अलातचयः, भूतोपद्रवनिवारणार्थमिति भावः येषु तैः, यद्वा,—किंशुकः—पलाशवृक्षः, रोचनः,—कूटशाल्मलीसञ्ज्ञकः शाल्मलीभेदः, ("रोचनः कूटशाल्मलिः" इत्यमरः) ताभ्याम् आरचितं—कृतं, मण्डलं—वेष्टनं, इतिरित्यर्थः, यस्य तादृशे, मण्डपे वल्वजे बद्धः—कृतः, अङ्गारराशि,—अनुद्धृताग्निराशिसमूहः, शैत्यनिवारणार्थं व्याघ्रादिभीतिनिवारणार्थं वा इति भावः येषु तैः।

(४२३) शाल्मलीति।—शाल्मलि—रक्तपुष्पा, ("शाल्मली रक्तपुष्पा च मुकुटी स्थिरजीविता" इति कोषः) तस्याः फलानां तूलसञ्चयैः,—तूलराशिभिः, बहुलानि—आकीर्णानि तैः। सन्निहितेति।—सन्निहितानि—स्थितानि, नलशालयः,—शालिविशेषाः, शालूकखण्डाः,—पद्ममूलानां खण्डाः, ("पद्ममूलन्तु शालूकम्" इति कोषः) कुमुदबीजानि—कैरवशस्यानि, वेणवः,—वंशाः, तण्डुलाः—धान्यसाराः, निस्तुषधान्यानीत्यर्थः, यद्वा,—वेणुतण्डुलाः,—वंशबीजानि वंशजातयवाकारपदार्थभेदा इत्यर्थः येषु तैः।

(४२४) सङ्गृहीतेति।—सङ्गृहीतानि—सञ्चितानि, मालानां—क्षेत्रपद्मानां, बीजानि—शस्यानि येषु तैः, यद्वा—सङ्गृहीतानि मालानां—पुष्पाणां, "पिण्डि" इति बङ्गे प्रसिद्धानामित्यर्थः, बीजानि—अङ्कुरकारणानि, यद्वा,—सङ्गृहीतानि मालबीजानि—चैत्रस्यशस्यानि येषु तैः, ("मालं क्षेत्रे स्त्रियां पुष्पादिमालायां जने पुमान्" इति मेदिनी)। भस्मेति।—भस्मना—पांशुना, मलनेन—मर्द्दनेन, म्लानं—मलिनतां गतम्, यत् कायस्थकूटं—लघुपतिकाराशिः, तेन व्याहताः,—

(४२५) आम्रानराजादनमदनफलस्फीतैः, मधूकासवमद्यप्रायैः, (४२६) कुसुम्भकुम्भगण्डकुसूलैः, अविरहितराजमाषवपुषकर्कटिकाकुष्माण्डालाबूबीजैः, (४२७) पोष्यमाणवनविडाल-

निहिता, कटा,—"मादुर" इति वङ्गभाषया ख्यातानि शयनानि येषां ते, यद्वा, —भस्मना—भूतीनां, मलनेन—कर्दमेन ("मलन पटवासे ना कर्दमे तु नपुंसकम्" इति मेदिनी) जलार्द्रभस्मलेपनेनेत्यर्थः, (दृश्यते च गाम्भारीफलत्वच भस्मलिप्तानि लोके) स्नाना ये काश्मर्या,—गाम्भारीवृक्षा ("गाम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका। श्रीपर्णी भद्रपर्णी च काश्मर्यश्च" इत्यमरः) तेषां कूटे—राशौ, खण्डितलडवसमूहोपरि इत्यर्थः, व्याश्रिता कटा, शोषणायमिति भावः येषां ते।

(४२५) आम्रानिति।—आम्रानानि—दूषचक्षुष्काणि, राजादनं,—कपीटाख्यवृक्षभेदः, ("क्षीरोदकस्तु राजन्यः क्षीरवृक्षः कपीद्रुमः। राजादनी दृढस्कन्धः कपीटः प्रियदर्शनः॥" इति कोषः), यद्वा,—राजादनं—प्रियालं, "राजादनं प्रियालश्च" इत्यमरः) मदनं,—"मयना" इति वङ्गीयैराख्यातः वृक्षश्च, ("मदनं शल्यकी रोध" इति कोषः) तयोः फलानि तैः स्फीतानि—पूर्णानि तैः। मधूकेति। —मधूकानां—"महुया" इति ख्यातानां गुडपुष्पाणां, ("मधूके तु गुडपुष्पमधुद्रुमौ" इत्यमरः) आसवाः,—रसा एव, यद्वा,—मधूकेभ्यः कृताः आसवाः,—सन्धानविशेषः, मद्यविशेषा इत्यर्थः ता एव मद्यानि—सुराः प्रायेण—बाहुल्येन येषु तैः।

(४२६) कुसुम्भेति।—कुसुम्भानां—महारजनाख्यपुष्पाणां, कुम्भाः,—घटाः, गण्डानां—खड्गाख्यमृगभेदानां, कुसूलानि—स्थानानि येषु तैः, यद्वा,—कुसुम्भानां—महारजनानां, ("स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि" इत्यमरः) कुम्भानां—गुग्गुलूनाञ्च, ("कुम्भौ राश्यन्तरे। घटे क्लीबन्तु गुग्गुलौ" इति मेदिनी) गण्डाः, —पिण्डकाः, तत्संस्थानविशेषा इत्यर्थः, ("गण्डः स्यात् पुंसि खड्गिनि। ग्रहयोगप्रभेदे च वीरे च पिटकेऽपि च॥" इति मेदिनी) गण्डाः,—पिण्डा इत्यर्थौ वा, तेषां कुसूलाः,—स्थापनार्थस्थानविशेषाः, गोण्यो वा येषु तैः। अविरहितेति।—अविरहितानि—पूर्णानि राजमाषाणां—निष्पावाणां "वरवटी" इति वङ्गे प्रसिद्धानां व्रीहिभेदानां वा, वपुषाणां—"शशा" इति वङ्गभाषया प्रसिद्धानां लाउकानां, कर्कटिकानां—"काँकुड" इति वङ्गे ख्यातानां, कुष्माण्डानां—कर्कारूणाम्, अलाबूनां—तुम्बीनाञ्च, बीजानि—अङ्कुरकारणानि येषु तैः।

(४२७) पोष्यमाणेति।—पोष्यमाणा,—पाल्यमानाः, वनविडाला,—

मालुधाननकुलशालिजातजातकादिभिः अटवीकुटुम्बिनां गृहैः उपेतं वनग्रामकं ददर्श, तत्रैव च अवसदिति।

इति श्रीबाणभट्टकृते हर्षचरिते छत्रलम्भो नाम
सप्तम उच्छ्वासः ॥ ७ ॥

---

आरण्यमार्जाराः मालुधानाः,—प्राणिविशेषाः, मातुलाहिनामसर्पभेदा वा, ("मालुधानो मातुलाहिः" इत्यमरः) ते तु निर्विषा ज्ञेयाः, नकुलाः—"वेजि" इति वङ्गे प्रसिद्धाः सर्पशत्रवः, शालिजाताः—जीवभेदाः, जातकादयश्च—प्राणिविशेषाः येषु ते तथा,—शालयः,—"खटाश" इति वङ्गे प्रसिद्धाः गन्धमार्जाराः ("शालिस्तु कलमादौ च गन्धमार्जारके पुमान्" इति मेदिनी) तेषां जातानां—समूहानां, जातकादयः,—शावकादयः इत्यर्थः, यद्वा—तेभ्यः जाताः—उत्पन्नाः ये जातकाः—शावकाः, तदादयः,—तत्प्रभृतयः येषु ते, ["जातकादिभिः" इत्यत्र "जालकादिभिः" इति पाठः समीचीनतया प्रतिभाति पोत्रमार्गवनविडालादिजातानां—समूहानां, जालकानि—आनायाः, पिञ्जरा इति यावत् तदादयः यत्र ते]। अटवीकुटुम्बिनः—वनगृहिणाम्। उपेतं—युक्तं वनग्रामकम्—अरण्यमध्यस्थं आवसथं तन्नामकं वा।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चाननेन वाचस्पतिसमेन पण्डितकुलपतिना बि, ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितया
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीमन्नित्यबोध
विद्यारत्नाभ्यां परिवर्द्धितया प्रतिसंस्कृतया चामलाख्यया
श्रीहर्षचरितव्याख्यया सप्तम उच्छ्वासः ॥ ७ ॥

# अष्टम उच्छ्वासः।

सहसा सम्पादयता मनोरथप्रार्थितानि वस्तूनि॥
दैवेनापि क्रियते भव्याना पूर्व्वसेवेव॥ १॥
विद्वज्जनसम्पर्को नष्टेष्टज्ञातिदर्शनाभ्युदयः।
कस्य न सुखाय भवने भवति महारत्नलाभश्च?॥ २॥

(१) अथ अपरेद्युः उत्थाय पार्थिवस्तस्मात् ग्रामकात् निर्गत्य विवेश विन्ध्याटवीम्, आट च तस्याम् इतश्चेतश्च सुबहून्

---

अथ पुरुषप्रयत्नं विनाऽपि सुदैवानुकूल्येन सत्पुरुषाणां मनोरथसिद्धिर्भवतीति शार्थ्यं प्रदर्शयन्नाह सहसेति।—सहसा—हठात् मनोरथप्रार्थितानि—मनोऽभीष्टानि,अभिलषितानीत्यर्थः, वस्तूनि—द्रव्याणि, सम्पादयता—संयोजयता, प्रददता इत्यर्थः, दैवेनापि,—भाग्येनापि अनुकूलेनेति भावः किं पुनः पुरुषकारेण अन्येन वा इत्यपिशब्दार्थः, भव्यानां—योग्यानां, शुभफलनाभाहाणामित्यर्थः, सत्पात्राणामिति भावः, ("भव्य शुभे च सत्ये च योग्ये भाविनि च त्रिषु" इति मेदिनी) पूर्व्वसेवा—प्रथमा परिचर्य्या, क्रियते इव—विधीयते इव, सुदैवं हि सहसैव सतां मनोरथं सम्पाद्य सदनुरागस्य प्रथमनिदर्शनं प्रदर्शयति चरमत्वापि प्रभूताभ्युदयं जनयतीति भावः। श्लोकेनानेन भाग्यवतां सतां हर्षस्य दैवानुकूल्येन यात्रायाः साफल्यं सूचितम्। अत्र पूर्व्वसेवायाः अक्रियमाणाया अपि तत्त्वेन सम्भावनोत्प्रेक्षितमात् क्रियोत्प्रेक्षाऽलङ्कारः। आर्य्या वृत्तम्॥ १॥

विद्वदिति।—विदुषां जनेन—पण्डितलोकेन सम्पर्कः—सङ्गः, सख्यमिति भावः, तथा नष्टेति।—नष्टस्य—अदर्शनं गतस्य, इष्टस्य—प्रियस्य ज्ञातेः,—बन्धुजनस्य, दर्शनं—साक्षात्कारः तदेव अभ्युदयः—मङ्गलम्, इष्टलाभजनितानन्द इत्यर्थः, भवने—गृहे, महारत्नानां—महामूल्यमणीनाम् अन्विष्यादि दुर्लभानामिति भावः लाभश्च—प्राप्तिश्च, कस्य—जनस्य इति भावः, सुखाय—आनन्दाय न भवति?—न जायते? अपि तु सर्व्वस्य एव भवति इत्यर्थः एतेन हर्षस्य दिवाकरमित्राख्यविद्वन्मित्रलाभः भगिन्या राज्यश्रिया प्राप्तिः महामूल्यैकावलीलाभश्च सूचितः। अत्र प्रस्तुतानां सम्पर्काभ्युदयरत्नलाभानामेकेन सुखजननयोग्यत्वरूपधर्म्मेण सह सम्बन्धात् तुल्ययोगिताऽलङ्कारः। आर्य्या वृत्तम्॥ २॥

(१) एतदेव प्रतिपादयति, अथ इत्यादि।—अपरेद्युः,—अपरस्मिन् दिवसे, इतग्रामे आवासग्रहणस्य परादिने इत्यर्थः। आट—बभ्राम। "एकदा तु भूपते"

दिवसान् । एकदा तु भूपतेर्भ्रमत एव आटविकसामन्त-
शरभकेतोः सूनुर्व्याघ्रकेतु. नाम कुतोऽपि (२) कज्जलश्यामल-
श्यामलतावलयेनाधिललाटम् उच्चैःकृतमौलिबन्धम्, (३) अन्ध-
कारिणीम् अकारणभुवा भ्रुकुटिभङ्गेन विशाखेन त्रियामामिव
साहससहचारिणीं ललाटस्थलीं सदा समुद्वहन्तम्, (४) अव-
तंसितैकशुकपक्षकप्रभाहरितायमानेन पिनद्धकाचरकाचमयि-
कर्णिकेन श्रवणेन शोभमानं, (५) किञ्चिच्चुलुम्प प्रविरल-
पक्ष्मणः चक्षुषः सहजेन रागरोचिषा रसायनरसोपयुक्तं तार-

---

इत्यस्य "व्याघ्रकेतु. शबरयुवानमादाय आजगाम" इति उत्तरेण सम्बन्धः । भूपतेः,—हर्षस्य, [ कर्मणि षष्ठी ] । आटविकेति ।—आटविकः,—आरण्यः सामन्तः,—अधिराजः, वनप्रदेशरक्षणाय हर्षात् प्राप्ताधिकार इत्यर्थः, यः शरभकेतुः,—तदाख्यः कश्चित् तस्य, सूनुः,—पुत्रः, इति व्याघ्रकेतुरित्यस्य विशेषणम् ।

(२) शबरयुवानं विशिनष्टि, कज्जलेति ।—कज्जलवत्—अञ्जनवत् श्यामला—नीला, या श्यामलता—गन्धप्रियङ्गुवल्ली, सा एव वलयः—वेष्टनं तेन अधिललाटं—ललाटोपरि, उच्चैरिति ।—उच्चैः कृतः,—उन्नमय्य स्थापितः, मौलिबन्धः —मूर्धकेशोच्चयः येन तथोक्तम् ।

(३) अकारणभुवा—विना कारणं जातेन इत्यर्थः, स्वाभाविकेन इति भावः, विशाखेन—त्रिरेखेण, भ्रुकुटिभङ्गेन—भ्रूकौटिल्येन, अन्धकारिणीम्—अन्धकारवतीं भ्रूसङ्कोचनेन नेत्रयोराहतभागत्वादिति भावः, यद्वा —अन्धकारिणीं—कृष्णवर्णामित्यर्थः, अत एव त्रियामामिव—रात्रिमिव, तामसामित्यर्थः यावत् साहससहचारिणीं —साहससङ्गिनीम्, बलपूर्वककार्यकरणसामर्थ्यबोधिकामिति भावः, ललाटस्थलीं —भालदेशं समुद्वहन्तं—दधानम् ।

(४) अवतंसितेति ।—अवतंसितस्य—भूषणीकृतस्य, एकस्य—एकमात्रस्य, शुकपक्षकस्य—कीराख्यपक्षिपतत्रस्य, प्रभया—कान्त्या, हरितायमानः—श्यामायमानः तेन पिनद्धेति ।—पिनद्धा—बद्धा, काचरस्य—कठिनस्य, काचमयी,—काचाख्य-रत्नस्य, कर्णिका—कर्णभूषणं, काचमणिनिर्मितं कर्णभूषणमित्यर्थः यत्र तथाभूतेन, श्रवणेन—कर्णेन, शोभमानं—राजमानम् ।

(५) किञ्चिच्चुलुम्पस्य—ईषत् क्लिन्नस्य, ("चुलु क्लिन्नाक्ष चुल्लचिल्लपिल्ला क्लिन्नेऽक्ष्णि

स्यं चतजमिव चरन्तम्, अवनाटनासिकं, चिपिटाधरं, चिक्किनचिवुकम्, (६) अहीनहनूत्कटकपोलकूटास्थिपर्य्यन्तम्, ईषदुदग्रग्रीवावन्यं, स्कन्नस्कन्धार्द्धभागम्, (७) अनवरतकोदण्डकुण्डलीकरणकर्कशव्यायामविस्तारितेन अंसलेन उरसा हसन्तमिव तटशिलाप्रथिमानं विन्ध्यगिरेः,

भाषली" इत्यमरः) प्रविरलपक्ष्माणं,—अल्पलोम। सहजेन—स्वाभाविकेन रागरोचिषा—लोहितप्रभया रसायनरसोपयुक्तं—रसायनरसेन—औषधविशेषरसेन सह उपयुक्तं—पीतम् इत्यर्थः, तरक्षु,—मृगादनः "नेकड़े बाघ" इति वङ्गे प्रसिद्ध क्षुद्रव्याघ्र विशेष इत्यर्थः, ("तरक्षुस्तु मृगादनः" इत्यमरः) तस्य इदं तारक्षवं, तच्च कश्चित् रोगविशेषे (यक्ष्मणि) उपयुज्यते इति वैद्यकाः, क्षतजमिव—रक्तमिव, चरन्तं—स्रवन्तम्। अवनाटनासिकं—निम्ननासापुटम्, ("अवटीटोऽवनाटश्चावभ्रटो नतनासिके" इत्यमरवचनात् अवनाटशब्देनैव निम्ननासिके लब्धेऽपि पुनर्नासिकाशब्दग्रहणं नासाया अतिनिम्नत्वद्योतनार्थमिति मन्तव्यम्) अन्तःप्रविष्टनासिकमित्यर्थः, "खाँदा नाक" इति वङ्गभाषया प्रसिद्धमिति भावः। चिपिटाधरं—स्थूललम्बरदनच्छदम्। चिक्किनचिबुकं—स्थूलिपङ्कुलाधराधोभागम्।

(६) अहीनेति।—अहीनौ—अन्यूनौ प्रवृद्धौ इत्यर्थः हनुभ्यां—कपोलोर्द्ध भागाभ्याम्, उत्कटौ—उन्नतौ विषमौ वा, कपोलयोः—गण्डयोः, ("ओष्ठाधरौ तु रदनच्छदौ दशनवाससी। अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परो हनुः" इत्यमरः) कूटौ—शिखरभूतौ, अस्थिपर्य्यन्तौ—कङ्कालप्रान्तौ यस्य तम्, अत्युन्नत हन्वस्थिकपोलम् अत एव निम्नहनुदशमित्यर्थः। ईषदुदग्रग्रीवावन्ध्यम्—ईषदुदग्र—किञ्चिदुन्नत, ["ईषदुदग्र—" इत्यत्र 'ईषदवाग्र—' इति पाठे – अवाग्र,—अवनत इत्यर्थः] ग्रीवाबन्ध,—कन्धरासन्धिः यस्य तम्। स्कन्नेति।—स्कन्न —शुष्क, लम्बमान, उन्नतो वा, स्कन्धार्द्धभाग —अंसाद्धदेशः यस्य तम्।

(७) अनवरतेति।—अनवरतेन—अविरामेण, कोदण्डस्य—धनुषः कुण्डली करणेन—आकर्षणेन, चक्रीकरणेन इत्यर्थः कर्कशेन—कठिनेन, व्यायामेन च—अङ्गचालनविशेषेण च, विस्तारितं—प्रसारं गतं तेन असलेन—बलवता प्रशस्तेन दृढेन च इति यावत् ("बलवान् मांसलोऽसलः" इत्यमरः) उरसा—वक्षःस्थलेन, विन्ध्यगिरेः,—विन्ध्याचलस्य, तटशिलाप्रथिमानं—तटशिलायाः—उन्नतप्रदेशस्थप्रस्तरस्य, प्रथिमानं—विस्तारं, हसन्तम्—उपहसन्तं, विपुलोरस्कमित्यर्थः।

(८) अजगरगरीयसा च भुजयुगलेन लघयन्तं तुहिनशैलशाल-द्रुमाणां द्राघिमाणं, (९) वराहबालवलितबन्धनाभिर्नागदमन-जूटिकाभिः जटिलीकृतपृष्ठे प्रकोष्ठे प्रतिष्ठां गतं गोदन्तमणिचितं त्रापुषं वलयं बिभ्राणम्, अतुन्दिलमपि तुन्दिभम्, (१०) अहीरमणीचर्मनिर्म्मितपट्टिकया उच्चित्रचित्रकत्वक्तारकितपरि-

(८) अजगरगरीयसा—अजगर इव—बृहदाकारसर्पविशेष इव गरीयः,—गुरुतरः, दीर्घमित्यर्थः तेन। तुहिनेति।—तुहिनशैलस्य—हिमाद्रेः, शालद्रुमाणां—सर्ज्जतरूणां, द्राघिमाणम्—अतिदीर्घतां, लघयन्तम्—लघूकुर्वन्तम्, आजानुलम्बितभुज-मिति भावः।

(९) वराहेति।—वराहस्य—शूकरस्य, बालैः—लोमभिः, वलितं—कृतं बन्धनं—ग्रथनं याभिः ताभिः, नागदमनजूटिकाभिः,—नागदमनः,—"नागदोना" इति वङ्गीयैराख्यातः विषहरः ओषधिविशेषः, तस्य जूटिका—प्रतानः, कुसुमं वा ताभिः, सर्पभयनिवारणार्थमिति भावः, [ "नागदमनजूटिकाभिः" इत्यत्र "नागदमनजूटिका-घाटिकाभिः" इति पाठे—नागदमनजूटिकाया घाटिका,—पुञ्जः, गुच्छ इत्यर्थः ताभिः ] जटिलीकृतं—युक्तं पृष्ठम्—उपरिभागः यस्य तथाभूते, प्रकोष्ठे—कूर्परमणि-बन्धयोरन्तरालदेशे ( "प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी ) प्रतिष्ठां—स्थितिं गतं—प्राप्तं, गोदन्तमणिचितं—सर्पविशेषशिरोरत्नमण्डितं त्रपुणा—सीसकेन रङ्गेण वा निर्वृत्तं त्रापुषं—सीसकेन रङ्गेण वा निर्म्मितमिति यावत्, यद्वा—त्रपुणः,—सीसकस्य रङ्गस्य वा विकारः त्रापुषं—सीसकनिर्म्मितं रङ्गनिर्म्मितं चेत्यर्थः, [ "त्रपुजतुनोः षुक्" ( ४।३।१३८ पा० ) इत्यण् षुगागमश्च। "त्रपु सीसकरङ्गयोः" इति मेदिनी ] वलयं—कटकं, बिभ्राणं—दधानम्। अतुन्दिलं—तुन्दिलः,—बृहत्कुक्षिः स्थूलोदरः पुमानित्यर्थः, ( "तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचिण्डिलः" इत्यमरः ) स न भवतीति सः क्षीणोदरः कृशमध्यमिति वा, तुन्दिभम्—उन्नतनाभिम्, [ "तुन्दिवलि-वटेर्भः" ( ५।२।१३९ पा० ) तुन्दिः नाभिस्तुन्दिरिति तुन्दिशब्दात् भः। "तुन्दिभम्" इत्यत्र "तुण्डिभम्" इति पाठोऽपि स एवार्थः ]।

(१०) अहीति।—अहीरमणी—द्विमुखः चित्रकाख्यः जन्तुभेदः, यच्छायया गच्छतोऽपि अपरसर्पत्रासकः भवतीति बोध्यम्, [ "अहीरमणि—" इत्यत्र "अहीरणि—" इति पाठस्तु साधीयान्, अहीरणी इति शब्दस्य कोषादावदर्शनादर्थासङ्गतेश्च, अहीन् ईरयति दूरीकरोति इति व्युत्पत्त्या "राजसर्प" इति प्रसिद्धः द्विमुखसर्पविशेषः

वारया (११) सङ्कुाजिनजालकितया शृङ्गमयमसृणमुष्टिभाग-भास्वरया (१२) पारदरसलेशलिप्तसमस्तमस्तकया कृपाण्या करालितविसङ्कटकटिप्रदेशं, (१३) प्रथमयौवनोल्लिख्यमान-मध्यभागभ्रष्टमांसभरितौ इव स्थवीयसावूरुदण्डौ दधतम्,

---

त्वहीरषि, तद्दर्शनादितरे सर्पा पलायन्ते] तस्याः त्वचा—त्वचा, निर्मिता—रचिता, पट्टिका—खड्गकोषधारणार्थं वक्षसि तिर्य्यग्विलम्बितचर्म्मनिर्मितप्रशस्ततनु-भेदः यस्याः तथाभूतया, उच्चित्रेति।—उच्चित्रा—स्वभावोद्भूतचित्रा, विचित्रवर्णा इत्यर्थः, या चित्रकस्य—पशुविशेषस्य त्वक्—चर्म्म तया तारकित,—मुक्ताफलतारा इव परिदृश्यमान इत्यर्थः, परिवारः,—खड्गकोषः, परिवेष्टनमित्यर्थः, यस्याः तथाभूतया। ("परिवारः परिजने खड्गकोषे परिच्छदे" इति मेदिनी) ["अहीरमणी ·परिवारया" इत्यत्र "अहीरमणीचर्म्मनिर्मितपट्टिकयोच्चित्रचित्रकत्वक्तारकितपरिवारया" इति पाठे,—ताहशपट्टिकयो,—खड्गकोषस्य उभयपार्श्वावस्थितचत्वारविशदनिबद्धचर्म्मरज्ज्वोरित्यर्थः, आबद्धया इति अध्याहार्य्यं चित्रया—विविधवर्णया, चित्रकत्वचा तारकित परिवार यस्या तथाभूतया]।

(११) सङ्कुजेति।—सङ्कुजेन—सङ्कुचितेन, अजिनेन—हरिणचर्म्मणा, जालकिता—गवाक्षिता जालाकृतवत् परिदृश्यमाना इत्यर्थः तया, मृतसङ्कुचितहरिणचर्म्मनिर्मितकोषाभ्यन्तरस्थावरणया इत्यर्थः, आदौ ताहशचर्म्मणा कृपाणीमावेष्ट्य पश्चात् कोषमध्ये स्थापितवान् इति भावः, शृङ्गेति।—शृङ्गमयेन—माहिषमार्गादिविषाण-निर्मितेन मसृणेन—श्लक्ष्णेन मुष्टिभागेन—त्सरुदेशेन, मुष्टिधार्य्यस्थानेनेत्यर्थः, भास्वरा—दीप्तिमती तया।

(१२) पारदेति।—पारदस्य—सूतस्य, रसः,—द्रवः, यद्वा—पारद एव रसः,—विषं, तस्य लेशेन—बिन्दुना लिप्त—दिग्धं समस्त—सम्पूर्णं, मस्तकं—शिरोभागः यस्याः तया, कृपाण्या—छुरिकया कर्त्तर्य्या वा, ("कृपाणी खड्गे छुरिकाकर्त्तर्य्योरपि योषिति" इति मेदिनी) करालितेति।—करालितः,—भीषणीकृतः, विसङ्कटः,—विशालः, स्थूल इत्यर्थः, कटिप्रदेशः,—श्रोणिफलकं यस्य तम्।

(१३) प्रथमेति।—प्रथमेन—अभिनवेनेत्यर्थः, यौवनेन—तारुण्येन, उल्लिख्य-मानात्—उत्खन्यमानात्, क्रमशः क्षीयमाणादिति यावत् मध्यभागात्—उदर-देशादिति भ्रष्टेन—स्खलितेन, मांसेन—पिशितेन, भरिताविव—आपूरिताविव, स्थवीयसौ—अतिस्थूलौ।

(১৪) অচ্ছভল্লচর্ম্মময়েণ ভল্লীপ্রায়প্রভূতশরভৃতা (১৫) শবল শার্দ্দূলচর্ম্মপটপীড়িতেন অলিকুলকালকম্বললোম্না পৃষ্ঠ ভাগভাজা ভস্ত্রাভরণেন পল্লবিতমিব কার্শ্যমুপদর্শয়ন্তম্, (১৬) উত্তরত্রিভাগোল্লসিতচাষপিচ্ছচারুশিখর খদির জটানির্ম্মাণে ত্বরপ্রাণে (১৭) প্রচুরময়ূরপিত্তপত্রলতাচিত্রিত ত্বচি ত্বচি সারগুরুণি বামস্কন্ধাধ্যাসিতধনুষি দোষি লম্বমানেন (১৮) অবাক্‌শিরসা শিতশরকৃত্তৈকনলকবিবর

---

(১৪) অচ্ছেতি।—অচ্ছভল্লচর্ম্মময়েণ—ভল্লুকচর্ম্মনির্ম্মিতেন ("ঋক্ষাচ্ছভল্লভল্লুকাঃ" ইত্যমরঃ) ভল্লীতি।—ভল্লী—অস্ত্রবিশেষঃ তৎপ্রায়ান্—তত্তুল্যান্ প্রভূতান্—প্রচুরান্ শরান্—বাণান্ বিভর্ত্তি ধারয়তীতি তথোক্তেন।

(১৫) শবলেতি।—শবল—চিত্রং শার্দ্দূলচর্ম্মৈব—ব্যাঘ্রাজিনমেব পটঃ—আবরণং তেন পীড়িতম্ আবৃতং তেন অলীতি।—অলিকুলং—ভৃঙ্গবৃন্দং তদ্বৎ কালং—কৃষ্ণবর্ণং যৎ কম্বললোম—রল্লকরোম তেন তদুপলক্ষিতেন ইতি ভাবঃ পৃষ্ঠভাগভাজা—পৃষ্ঠদেশস্থিতেন ভস্ত্রাভরণেন—ভস্ত্রা—চর্ম্মনির্ম্মিতাস্ত্রোপকরণাধারঃ ব্যাঘ সৈব আভরণং—মণ্ডনং তেন ভূষণেন বা পল্লবিতমিব—পূরিতমিব কার্শ্যং—কৃশতাম্ আত্মন ইতি ভাবঃ উপদর্শয়ন্তং—প্রকাশয়ন্তং ভস্ত্রাভরণভারেণ অতিপীড়িতমিব আত্মনঃ প্রকটয়ন্তমিত্যর্থঃ।

(১৬) উত্তরেতি—উত্তরে—উপরিতনে ত্রিভাগে—তৃতীয়ে ভাগে ভূপরোপরি ভাগ ইত্যর্থঃ উল্লসিতং—মণ্ডনীকৃতং যৎ চাষপিচ্ছং—নীলকণ্ঠাখ্যপক্ষিপক্ষং তেন চারু—মনোজ্ঞং শিখরম্—অগ্রং যস্য তথোক্তে খদিরেতি—খদিরজটায়াঃ খদির—বৃক্ষস্য মূলস্যেব স্থূলস্য ইতি ভাবঃ নির্ম্মাণং—ঘটনং যস্য তথাভূতে খদিরজটানিভে ইত্যর্থঃ পীবরাম ইতি যাবৎ ত্বরপ্রাণে তীক্ষ্ণবলে।

(১৭) প্রচুরেতি—প্রচুরেণ বহুনা ময়ূরপিত্তেন—শিখিমায়ুনা যা পত্রলতা—রচনাবিশেষঃ রচিতেতি ভাবঃ তয়া চিত্রিতা—রঞ্জিতা ত্বক্—চর্ম্ম যস্য তথোক্তে। ত্বচি চর্ম্মণি সারগুরুণি—সারেণ—কাঠিন্যেন গুরু—মহান্ তস্মিন্ দুর্ভেদ্যচর্ম্মণি ইত্যর্থঃ বামেতি।—বামস্কন্ধে—সব্যাংসে অধ্যাসিতং—স্থিতং ধনুঃ—কার্ম্মুকং যস্য তথাভূতে দোষি—ভুজে ("ভুজবাহূ প্রবেষ্টো দোঃ" ইত্যমরঃ)।

(১৮) অবাগিতি—অবাক্‌শিরসা—অধোমুখেন শিতেতি।—শিতেন—তীক্ষ্ণেন শরেণ—

प्रवेशितेतरजङ्घाजनितस्वस्तिकबन्धेन (१९) बन्धूकलोहित रुधिरराजिरञ्जितघ्राणवर्त्मना (२०) वपुर्विततिव्यक्तविभाव्यमानकोमलक्रोडरोमशुक्लिम्ना शशेन (२१) शिताटनीशिखाग्रग्रथितग्रीवेण (२२) चापाहतचञ्चूत्तानताम्रतालुना तित्तिरिणा वर्णकमुष्टिमिव मृगयाया दर्शयन्तं, (२३) विषमविषदूषितवदनेन च विकर्णेन कृष्णाहिना इव मूलगृहीतेन

---

बाणेन, कृत्त—छिन्न यत् एकं नलक—“नला” इति ख्यात जङ्घास्थिविशेष, तस्य विवरे—छिद्रे प्रवेशिता—ढौकिता या इतरजङ्घा—इतरपादः अन्या जङ्घा तया जनित —कृत स्वस्तिक बन्ध —आसनबन्धविशेष यस्य तथाभूतेन ।

(१९) बन्धूकेति।—बन्धूक—तदाख्य पुष्प तद्वत् लोहित—रक्तं, यत् रुधिर—शोणित, तस्य राज्या—धारया रञ्जित—प्राप्तराग रक्तवर्णमित्यर्थ, घ्राणवर्त्म—नासारन्ध्र यस्य तेन नासारन्ध्रस्रुतरक्तेन इत्यर्थ ।

(२०) वपुरिति।—वपुष —शरीरस्य, विततया—विस्तारेण गतजीवत्वेन देहस्य सङ्कोचाद्यभावादिति भाव व्यक्त—स्पष्ट यथा तथा, विभाव्यमान,—दृश्यमान कोमलाना —सुकुमाराणा क्रोडरोम्णाम्—वक्षोलोम्नां शुक्लिमा—श्वैत्य यस्य तथाभूतेन शशेन—तदाख्येन पशुविशेषेण ।

(२१) शितेति।—शिता—तीक्ष्णा या अटनी—धनुष्कोटि धनुषोऽग्रभाग इत्यर्थ (‘कोटिरस्याटनी’ इति धनुःप्रकरणे अमर) तस्या शिखा—चूडा, तस्या अग्रम्—ऊर्द्ध्वभाग तत्र ग्रथिता—निबद्धा, ग्रीवा—कन्धरा यस्य तेन ।

(२२) चापेति।—चापेन—धनुषा आहतायाम्—आस्फालितायां, चञ्चौ—आस्याम उत्तान —ऊर्द्धीभूत परिदृष्ट इत्यर्थ व्यात्तमुखत्वादिति भाव ताम्र,—रक्तवर्ण तालु —काकुदम्, अन्तर्मुखापरिभाग इत्यर्थ यस्य तेन तित्तिरिणा—तदाख्येन पक्षिणा मृगयाया —आखेटस्य मृगहननक्रियाया इत्यर्थ वर्णकमुष्टिमिव—मुष्टिगृहीतवर्णस्य प्रथमम् अक्षरलेखनमिव “हाते खडी” इति वङ्गभाषया प्रसिद्ध विधानम् इति यावत् क्षुद्रस्य पक्षिवधरूप प्रथम मृगयाव्यापारमात्मन प्रकाशयन्तमिव स्थित भाव ।

(२३) विषमेति।—विषमेण—दारुणेन विषेण—गरलेन लिप्तेन दंष्ट्राग्रेण च इति भाव दूषित—मलिन वदनम्—अग्रभाग मुखञ्च यस्य तेन कृष्णाहिना इव—कृष्णसर्पेण इव, मूलगृहीतेन—मूल—अधः भाग, पुच्छदेश च गृहीत —

व्यग्रदक्षिणकराग्रं, जङ्गममिव गिरितटतमालपादपं, यन्त्रोल्लिखितम् अश्मसारस्तम्भमिव भ्रमन्तम्, (२४) अञ्जनशिलाच्छेदमिव चलन्तम्, अयःसारमिव गिरिविन्ध्यस्य गलन्तं, पङ्कस्थलीं करिकुलानां, कालपाशं कुरङ्गयूथानां, (२५) धूमकेतुं मृगराजचक्राणां, महानवमीमहं महिषमण्डलानां, हृदयमिव हिंसायाः, फलमिव पापस्य, कारणमिव कलिकालस्य, कामुकमिव कालरात्रेः शबरयुवानम् आदाय आजगाम;

ध्रुत तत, विकर्षेण—तदाख्यास्त्रविशेषेण कर्णरहितशरविशेषेणत्यर्थ, व्यग्रदक्षिण करात्र—व्यासक्तदक्षिणहस्ताग्रभाग, विशिखधारण दधानमित्यर्थः। जङ्गम—चरिष्णु, गतिमन्तमित्यर्थ, गिरीति।—गिरितटे—पर्व्वतप्रस्थे, य तमालपादप,—कालस्कन्धत्व तमिव, प्रायकृष्णत्वादिति भाव। यन्त्रोल्लिखित—शाणयन्त्रघृष्टमित्यर्थ, शिल्पविशेषविन्यस्तमिति वा, अश्मसारस्तम्भमिव—दृढप्रस्तरस्थूणामिव, महत्त्वकृष्णवर्णदृढकायत्वादिति भाव।

(२४) अञ्जनशिलाच्छेदमिव—कज्जलप्रस्तरखण्डमिव। अय सारमिव—लौहस्य स्थिरांशमिव। करिकुलाना—गजयूथाना, पङ्कस्थलीमिव—सकर्दमभूमिमिव, मारकत्वादिति भाव, यथा करिणो दुस्तरपङ्कमासाद्य गन्तु समर्थाः, अवसीदन्ति च तथा अमु प्राप्य अपि न पलायितु समर्थाः, म्रियन्ते च इति तात्पर्यम्। [ 'पङ्कस्थलीं करिकुलानाम्' इत्यत्र "पाकल करिकुलानाम" इति पाठे,—करिकुलाना पाकल—तदाख्य हस्तिना ज्वरमिव, ("पाकल कुष्ठभेषज्ये पुंसि स्यात् कुञ्जरज्वरे" इति मेदिनी) तदाख्यज्वरस्य करिणा प्राणनाशकत्वात, यदुक्त वैद्यके,—"असाध्योऽय ज्वरो व्याधि गोमहिषाश्वकुञ्जरे। किञ्चित् कष्टतमो नृणामन्यथा जीवघातक॥" "पाकल स तु नागानामभितापस्तु वाजिनाम्" इत्यादि। पाकलो यथा करिहन्ता तथा अयमपीति भाव ]। कुरङ्गयूथाना—मृगसङ्घाना, कालपाश—यमस्य बन्धनरज्जुमिव, दर्शनमात्रेणैव हननादिति भाव।

(२५) मृगराजचक्राणा—सिंहसमूहाना, [ राजसमूहानामित्यपि व्याख्यते ] धूमकेतुम—वह्निम, अग्निदर्शनस्य सिंहाना भयप्रदत्वादिति भाव, यद्वा—धूमकेतुमिव—उत्पातसूचकग्रहमिव, मारकत्वादिति भाव। धूमकेतु प्रादुर्भाव राजचक्राणामपि अशुभं सूचयतीति बोद्धव्यम्। महिषमण्डलाना—महिषसङ्घाना, महानवमीमह—शारदीयदुर्गानवमीमहोत्सवं,

दूरे च स्थापयित्वा विज्ञापयाम्बभूव,—"देव! सर्व्वस्य अस्य विन्ध्यस्य स्वामी, सर्व्वपल्लीपतीनां प्राग्रहरः शबरसेनापतिः भूकम्पो नाम। तस्य अयं निर्घातनामा (२६) स्वस्रीयः सकलस्य अस्य विन्ध्यकान्तारारण्यस्य पर्णानामपि अभिज्ञः, किमुत प्रदेशानाम्। एनं पृच्छतु देव, योग्योऽयम् आज्ञां कर्त्तुम्" इति कथिते च निर्घातस्तु (२७) क्षितितलनिहितमौलिः प्रणामम् अकरोत्, उपनिन्ये च तित्तिरिणा सह शशोपायनम्। अवनिपतिस्तु सम्मानयन् स्वयमेव तम् अप्राक्षीत्,—"अङ्ग! अभिज्ञा यूयम् अस्य सर्व्वस्य उद्देशस्य। (२८) विहारशीलाश्च दिवसेषु एतेषु भवन्तः। सेनापतेर्वा

---

कन्दराणि इति भावः ("गह्वरं कुहरं" इत्यमरः) महानदीनदे कृष्णा महिषी वलिचेन विन्ध्याश्रयन्त उपाकुर्वन्ति इत्यतः। 'इदमिव हिनायां' इत्यादि विशेषणावली सम्यक् जीवविनाशपरायणत्वात् इति भावो बोध्यः। कान्तारे,—सर्वप्राणिनाशिकाया यमभगिन्याः, सर्वजन्तुमरणोन्मादिताया वन्यावध्वा कामुकायाः—कान्तिमिव अस्य बहुजीवहत्याकरणात् सर्वप्राणनाशिकाया यमभगिन्याः कान्तिमिवेत्युत्प्रेक्षा बोद्धव्या। शबरयुवानं—शबरजातीयं तरुणवयस्कं पुमांसम्। आनयामास—प्राप। दूरे—स्थानात् समीपादिति भावः। विन्ध्यस्य—विन्ध्यारण्यस्य, स्वामी—अधिपतिः। सर्वपल्लीपतीनां—सर्वेषां—सकलानां पल्लीपतीनां—क्षुद्रग्रामाधिपतीनां, ("पल्ल्यल्पग्रामकुट्योः स्त्री" इति मेदिनी) प्राग्रहरः,—श्रेष्ठः।

(२६) स्वस्रीयः—भागिनेयः। विन्ध्यकान्तारारण्यस्य—विन्ध्याचलदुर्गमकाननस्य, ("कान्तारो वर्त्म दुर्गमम्" इत्यमरः)।

(२७) क्षिति०।—क्षितितले—भूपृष्ठे, निहिता—स्थापिता, मौलिः,—मस्तकं येन सः ("चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः)। तित्तिरिणा सह शशोपायनम्—तित्तिरिपक्षिसहितं शशकोपढौकनमित्यर्थः, उपनिन्ये—उपस्थापितवानित्यर्थः। अङ्गेति सम्बोधने अव्ययम् इत्यर्थः। अभिज्ञाः,—विशेषेण ज्ञातारः। उद्देशस्य—वनप्रदेशस्येत्यर्थः।

(२८) एतेषु दिवसेषु—बहुदिनं यावदिति भावः, यद्वा,—एतेषु—वनप्रदेशेषु,

अन्यस्य वा तदनुजीविनः कस्यचित् (२९) उदाररूपा नारी आगता भवेद्दर्शनगोचरम् ?" इति ।

निर्घातस्तु (३०) भूपालालापनप्रसादेन आत्मानं बहुमन्यमानः प्रणनाम, दर्शितादरश्च व्यज्ञापयत्—"देव ! प्रायेण अत्र हरिण्योऽपि न अपरिचिताः सञ्चरन्ति सेनापतेः, कुत एव नार्य्यः ? नापि एवंरूपा काचित् अबला। तथाऽपि देवादेशात् इदानीम् अन्वेषणं प्रति प्रतिदिनम् अनन्यकार्य्यैः क्रियते यत्नः। (३१) इतश्च अर्द्धगव्यूतिमात्र एव मुनिमहिते महति महीधरमालामूलरुहि महीरुहां षण्डे पिण्डपाती (३२) प्रभूतान्तेवासि-

---

दिवसेषु—प्रतिदिनमित्यर्थः, विहारशीलाः—विचरणपराः। सेनापतेः—भूकम्पस्य। तदनुजीविनः—सेनापतेः परिजनस्य।

(२९) उदाररूपा—महासौन्दर्य्यशालिनी, अतिरूपवतीत्यर्थः, ("उदारो दातृमहतोः" इत्यमरः)।

(३०) भूपालेति।—भूपालस्य—राज्ञः हर्षस्य यत् आलापनेन—आभाषणं, सम्बोधनपूर्ब्बकवाक्यप्रयोग इत्यर्थः तदेव प्रसादः,—अनुग्रहः महापराक्रमस्य सम्राजो हर्षस्य तादृशनेतरेण सह सम्भाषणादिति भावः तेन। बहुमन्यमानः,—श्लाघमानः। दर्शितादरः—ससम्मानमित्यर्थः। अपरिचिताः—अज्ञाताः, ["अपरिचिताः" इत्यत्र "अपरिगताः" इति पाठेऽपि स एवार्थः, "सर्वे गत्यर्था ज्ञानार्थाः" इति नियमात्]। कुत एव नार्य्यः,—मानुष्यस्तु कथमपि नैवापरिज्ञाताः सञ्चरितुं प्रभवन्तीति भावः। अबला, अत्रागता इति शेषः। देवादेशात्—राज्ञः भवत आज्ञया। अनन्यकार्य्यैः—नास्ति अन्यत्—अन्वेषणादपरं, कार्य्यं—कार्य्यं येषां तैः, अन्यकार्य्यं परिहृत्य इत्यर्थः, अस्माभिरिति शेषः।

(३१) इतः,—अस्मात् स्थानात्, अर्द्धगव्यूतिमात्रे—क्रोशैकपरिमिते, ("गव्यूतिः स्त्री क्रोशयुगम्" इत्यमरः) मुनिमहिते—तापसपूजिते महीधरमालामूलरुहि—पर्व्वतश्रेणिपादमूलजाते, महीरुहां—वृक्षाणां, षण्डे—समूहे, कानने इत्यर्थः, पिण्डपाती—पिण्डाय—ग्रासमात्राय, पतति—भिक्षां चरतीति तथोक्तः, ग्रासमात्रोपयोगिभिक्षाकरः इत्यर्थः, न तु सञ्चयीति भावः।

(३२) प्रभूतेति।—प्रभूतैः,—बहुभिः, अन्तेवासिभिः,—शिष्यैः, ("छात्रान्ते-

परिवृत: पराशरी दिवाकरमित्रनामा गिरिनदीम् आश्रित्य प्रतिवसति, स यदि विन्देत् वार्त्ताम्" इति। तत् श्रुत्वा नरपति: अचिन्तयत्,—"श्रूयते हि (३३) तत्रभवत: सुगृहीतनाम्न: स्वर्गतस्य ग्रहवर्म्मणो बालमित्रं मैत्रायणीय: त्रयीं विहाय ब्राह्मणायनो विद्वान् उत्पन्नसमाधि: सौगते मते युवा एव काषायाणि गृहीतवान् इति। प्रायशश्च जनस्य जनयति (३४) सुहृदपि दृष्टो भृशम् आश्वासम्। अभिगमनीयाश्च गुणा: सर्व्वस्य। कस्य न (३५) प्रतीक्ष्यो मुनिभाव:? भगवती वैधेयेऽपि धर्म्मगृहिणी गरिमाणम् आपादयति प्रव्रज्या, किं पुन: सकलजनमनोमुषि विदुषि जने?

---

चामिनौ भिक्षौ" इत्यमर:) परिवृत:—वेष्टित:। पराशरी—भिक्षु:, ["पराशरी" इत्यत्र "पाराशरी" इति पाठेऽपि स एवार्थ:, "भिक्षु: परिव्राट् कर्म्मन्दी पाराशर्य्यपि मस्करी" इत्यमर:]। वार्त्ता—वृत्तान्त, नार्य्या इति भाव:, विन्देत—जानीयादित्यर्थ:।

(३३) तत्रभवत:—मान्यस्य, सुगृहीतनाम्न:,—प्रात:स्मरणीयस्य, विख्यातस्येत्यर्थ:। बालमित्र—शैशवसुहृत्, मैत्रायणीय:,—वेदशाखाविशेषाध्येता ब्राह्मणायन:—ब्राह्मणकुलजात: द्विजश्रेष्ठो वा, उत्पन्नसमाधि:,—चित्तैकाग्रनिष्ठ:, गृहीतनियमो वा ("स्यु: समर्थननीवाकनियमाश्च समाधय:" इत्यमर:) सौगते—सुगत:,—बुद्ध:, तस्य इदं तस्मिन् मते—शास्त्रे, बौद्धधर्म्ममाश्रित्य इत्यर्थ:, त्रयीं—त्रिवेदीम्, ऋक्सामयजु:संज्ञक वेदत्रयमित्यर्थ:, ("स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी" इत्यमर:) विहाय—त्यक्त्वा, वैदिकधर्म्मं परित्यज्येत्यर्थ:, काषायाणि—कषायरक्तानि वसनानि।

(३४) सुहृत्—मित्र, दृष्ट:—साक्षात्कृतोऽपि, किमपि अकुर्व्वन्नपीति भाव:, आश्वासम्—आशा, प्रीतिं वा, भगिनीपतेर्ग्रहवर्म्मणो मित्रत्वात् सम्बन्धेन ममापि मित्रभूतस्य तस्य किमप्यकुर्व्वतोऽपि दर्शनं मे आनन्दप्रदं भविष्यतीति भाव:। अभिगमनीया:—अनुसरणीया:। सर्व्वस्य—यस्मिन् कस्मिन्नपि मते वर्त्तमानस्य इति भाव:, "गुणा: पूजास्थानं गुणिषु न च लिङ्गं न च वय:" इति तात्पर्य्यम्।

(३५) प्रतीक्ष्य:,—पूज्य:, ("पूज्य: प्रतीक्ष्य:" इत्यमर:)। मुनिभाव:,—

